॥ श्रीनृत्यगोपालोजयतितराम् ॥

## अथ मन्त्रभागवत १ मन्त्ररामायण २ इन ग्रंथोंकी प्रशस्ति ।

॥ छप्पय ॥

नँदनंदन श्रीकृष्णचंद्र व्रज विहरत निशदिन॥ दशरथ नंदन रामचंद्र मुनि गावत गुन गिन ॥ कहत वेद परमान मान पर ब्रह्म सनातन॥ नहिं समझत चित वीच नीच कलि जीव असुर जन॥ ज्यों उलूकको तेज रवि नहिं नहिं प्रकाश लखियत अवश॥ तिनहित छापे वेद मनु युत कृष्णसु यश अरु राम यश॥ १ ॥ शास्त्र श्रुति स्मृति औरु भागवत आदि पुरानसु। उप पुरान सु महानुभावके वचन प्रमानसु॥ इनको मानत नाहिं कहैं हम वेदहि मानत ॥ मन उपंग ठहरात बात नहिं तत्त्व पि[illegible]॥ तिन हिय बोध प्रबोध हित अरु होत तत्त्व पारायनजु॥ यह मंत्र भागवत वेदके छापिय मंत्र रामायनजु॥ २॥ [illegible]हिं पढत सु गुरुकर॥ वेद मंत्रके अर्थ कहत पुनि फेर फेर कर॥ करत वितुंडा वाद होतं निर[illegible] प्रभु तेंजु बहिर्मुख ॥ इन जनके मुख ऊपरें यह चपेटार्थ नृप नीति कर॥ [illegible]॥

[ खेमराज श्रीकृष्णदास, "श्रीवेङ्कटेश्वर" (स्टीम) यन्त्रालय ग्रक्ष–मुंबई ]

श्रीगणेशाय नमः ॥ श्रीनिवासाय नमः ॥ सत्यं ज्ञानमनन्तं यत्तद्विष्णोः परमं पदम् ॥ प्राप्तुं मन्त्रेषु गोपाल
विष्णोः कर्माणि पश्यत॥१॥ननु सत्यादिलक्षणमखण्डैकरसं विष्णोः परमं पदं पदनीयं स्वरूपं चेन्निरवद्यम् ।
तत्र विद्यावद्विषयाणि कर्माणि न सम्भवन्ति॥ नितरां विक्रियापराणां मन्त्राणां तत्प्रकाशनमन्त्राणां तत्प्रका-
शनपरत्वं न तु मांत्रकर्मावगत्या परमपदप्राप्तिः सम्भवतीत्ययोग्योयं नियोग इति चेत् ॥ सत्यम् ॥
सन्ति परमात्मनः पञ्चरूपाणि—भूबीजाङ्कुरतरुफलोपमानि शुद्धशबलसूत्रविराड्विष्णुदेवतासंज्ञानि ॥ तत्र
भूमेर्बीजादय इव शुद्धाच्छबलादयो नातिरिच्यन्ते ॥ तथा विपक्षे परिणतानेकबीजगर्भं फलमिव विराजि विष्णु
रनेकशबलगर्भोऽस्ति ॥ स च कारणत्वान्मूर्त्तत्वाच्चानेकब्रह्माण्डाश्रयो धरोद्धरणाद्यनेककर्माश्रयश्च । तस्यर्क्
साम च गेयस्य रूपम् । बिभ्रदिमामविन्दद्गुहेत्यादिश्रुतिभ्यः॥ अथ य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते
हिरण्यश्मश्रुर्हिरण्यकेश इत्यादिना प्रागुक्तस्य इयमेवर्गग्निः साम वागेव प्राणः सामेति च । पृथिव्यादिप्रपञ्च
ऋक्सामे गेष्णौ अङ्गुष्ठौ पर्वणी यस्य वराहस्य । इमां पृथिवीमित्यादिपदानामर्थः—सोयं विष्णुर्नित्यसिद्ध
ईश्वरः॥अन्ये तु तदाराधनसिद्धाः इन्द्राद्या ईश्वराः शलाटव इव फलभावं प्राप्ताः॥ते च सर्वे सर्वेश्वरा इति श्रूयन्ते॥

एते एव समाः सर्वे अनन्ता इति । तत्र बहूनां सर्वेश्वरत्वासंभवादेक एवायं गोत्वादिवज्जलचन्द्रवद्वा प्रतिदैवतं
परिसमाप्त इति स्वधर्मैरिव देवताधर्मैरपि स्तूयते॥उपहितेषु प्रतिबिम्बेषूपाधिधर्मान्वयदर्शनात् । न तूपाध्य-
भिमानिनी देवता स्वधर्मैरिव ब्रह्मधर्मैः स्तोतुं शक्या॥उपाधावुपहितधर्मान्वये तत्तत्स्वरूपलोपप्रसंगात् । ग-
च्छतीव घटाकाशो घटे गच्छति तूच्यते॥घटाकाशस्य नैस्पर्श्यं घटेस्तीति तु दुर्वचम् । यथा चाहुः—समारो-
प्यस्य रूपेण विषयो रूपवान् भवेत् । विषयस्य तु रूपेण समारोप्यं न रूपवत् इति ॥ अयमत्र संग्रहः ।
एकैकस्मिन्यथादर्शे प्रसादो मुकुरान्तरैः । सहितो दृश्यते देवेष्वेवं लोकः सुरान्तरैः ॥ १ ॥ तस्मात्स्युर्देवताः
सर्वाः प्रत्येकं विश्वयोनयः॥अन्योन्ययोनयश्चैव यथा यास्कमुनीरिताः ॥ २ ॥ यत्किंचिद्दैवतो मन्त्रो विष्णु
लीलोपबृंहितः॥वैष्णवः स यतो विष्णुः सर्वदेवतनामभृत् ॥३॥ ऋचां दशतयीस्थानां प्रायः शस्त्रेषु संग्रहः ।
स्तुतशस्त्रनयात्सर्वं स्तुतौ शस्त्रं प्रतिष्ठितम् ॥ ४ ॥ दशमण्डलान्यवयवायस्याः सा दशतयी बह्वृचः सन्ति॥
तासां तत्रस्थानामृचां शस्त्रेषु अप्रगीतमन्त्रसाध्येषु देवतास्तवनेषु प्रायेण विनियोगोस्ति॥वाचस्तोमाख्ये सर्वा
सामप्यृचां शस्त्रेषु विनियोगदर्शनात् । यावतीः कामयेत तावतीः शंसेदिति॥स्तुतेति॥त्रिविधा मन्त्राःक्रियास्मा

रका यागकारका देवतास्तावकाश्चेति ॥ तत्रेषेत्वेति शाखामाच्छिनत्ति ऊर्जेत्वेत्यनुमार्ष्टीति श्रौतविनियोगात् इषेत्वादयोमन्त्राः शाखाच्छेदनादीनां क्रियाणां स्मारका इति करणमन्त्राः इत्युच्यन्ते ॥ एत एवावघातादि काद्दष्टार्थतयाग्नयेऽनुब्रूहि अग्निं यज येयजामहेऽग्निं समिध्यज्ञके यष्टव्यदेवतासंकीर्तने पठ्यमाना अग्निर्मूर्द्धा भुवो यज्ञस्येत्यादयस्ते पत्नीक्रियास्मारकाः ॥ उदात्हतशब्दैरेव तस्याः स्मृतत्वात्—संस्कारकाः एव ॥ एवं चैतन्मंत्रपाठपूर्वकं कृतो यागः संस्कृतः सन्नपूर्वजननें समर्थो भवति ॥ तद्यथा तेनैते मन्त्रा यागाङ्गभूता अप्यवघातादिवन्नाद्दष्टार्थाः। अपि तु प्रोक्षणीयादिवदद्दष्टार्था एव।येतु आज्यैः वतेवृष्टेः स्तुवते प्र उ गशंसती त्यादिविधिविहिताः गीतमन्त्रसाध्यस्तवनरूपास्तोत्रशस्त्रार्थाः तेपि तत्क्रियाङ्गभूताः ॥ अपि तु स्वतन्त्राः। यथाग्न्यादीनां प्रणामपूर्वार्थत्वेपि मिथो नाङ्गाङ्गिभावः एवं सोमयागस्तोत्रशस्त्राणामपिसमुचितानामेकफलार्थ त्वेपि मिथो नांगांगिभावः—प्रयाजदर्शपूर्णमासवत्।तथा च सूत्रम्—आपिवा श्रुतिसंयोगात्प्रकरणे स्तौति शंसति क्रियासती विदध्यातामिति।तदेतदाह—स्तुत शस्त्रनयात्सर्वं स्तुतौ शस्त्रं प्रतिष्ठितामिति॥४॥ ( ऋगारूढानिसा मानि तुर्यो वेदोपि ऋङ्मयः।यजूंष्यृगनुगान्येव सर्वंस्तुत्योजनार्दनः॥५॥अविरोधादपूर्वत्वाद्देवतानिग्रहादिकम्॥

मन्त्रार्थवादप्रामाण्यान्मनुते बादरायणः॥६॥ अविरोधादिति॥विरोधे गुणवादः स्यादनुवादोवधारिते॥भूतार्थवाद
स्तद्धानादर्थवादास्त्रिधामतः ॥ यजमानःप्रस्तरः इत्यादिर्हि गुणवादवत्॥ यजमानः प्रस्तर इति गुणवादमात्रोगु
णात्प्रतीयमानस्य यजमानप्रस्तरयोरभेदस्य प्रत्यक्षतोविरोधात् अग्निर्हिमस्य भेषजमित्यादिरनुवादः ॥२॥तद
र्थस्य लोकेऽवधृतत्वात्॥मेधातिथिं कथगयनंमेषोभवंशेजहारेत्यादिर्विरोधानुवादयोरभावाद्भूतार्थवादोयम्॥विग्र
होहविषांभोगऐश्वर्यंचप्रसन्नता॥फलप्रदातृत्वमपिविभूतिःपरमेश्वरेइति।पंचकंविग्रहादिकम्॥जगन्माता दक्षिण
मिंद्रहस्तं अद्दीदिंद्रप्रस्थिते माहवींषि।इंद्रोदिव इंद्र ईं पृथिव्याः तस्मादिंद्रःस्तूयमानःप्रीतो मनसा हिरण्यरथं ददा
विति॥६॥अर्थवादसमुन्नीतविधिमुख्याद्विधेबली।श्रुतंह्यश्वेष्टिरुत्सृज्य कर्त्तारं कलपमृच्छति॥७॥ अर्थवादेति॥प्र
जापतिर्वरुणायाश्वमानयत्।स स्वां देवतां प्रार्थयते सपर्यदीयते स एतं वारुणं चतुष्कपालमपश्यत् इत्यर्थवादप
दश्रवणेऽश्वदातुर्वारुणीष्टिः प्रतीयते ॥ यावतोऽश्वान्प्रतिगृह्णीयात्तावतोवारुणांश्चतुष्कपालान्निर्वपेदितिविधिवशा
त्प्रतिगृहीतुः सा प्रतीयते॥ तत्रासंजातविरोधादर्थवादादूर्ध्वं श्रुतसंजातविरोधित्वाद्विधिवाक्यमेव यावतोऽश्वान्प्रति
ग्राहेदितिपरेणानेनपूर्वोक्तोपक्रांतेनैकवाक्यता नीयत इति सिद्धांतः॥७॥महाभाग्यादेवताया इत्युपक्रम्यप्रकृतिसा

वैनाम्न्याच्चेतरेतरजन्मानो भवन्तीतरेतरप्रकृतय इतियास्कः । यो देवानां नामधा एक एव । अदितेर्दक्षो अजायत दक्षाददितिः परीतिश्रुतयश्चैतमर्थं दर्शयंति । तस्मात्सिद्धं सर्वेषां मंत्राणां विष्णुपरत्वम् ॥ क्रियापरत्वं तु तेषामुपचारात् । तद्गतब्रह्मलिंगानां क्रियाङ्गे सामंजस्येनान्वयायोगात् । तथाहि । अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्। होतारंरत्नधातममित्यत्र मन्त्रे एकस्यैवाग्नेस्तुतिकर्मणः यज्ञं प्रति पुरोहितमित्यनेनाहवनीयादिरूपेणाधिकरणत्वं देवमित्यनेन सम्प्रदानत्वमृत्विजमित्यनेन करणकारकत्वं होतारमित्यनेन कर्तृकारकत्वं रत्नधातमामित्यनेनफलदातृत्वंचोक्तम्।नचैतद्विशेषणजातसामंजस्येन ज्वलने तदभिमानिन्यल्पेश्वरे वा संभवति।नहिसर्वस्मिन्यज्ञेसंप्रदानत्वं मुख्यं फलप्रदत्वं वा मुख्यमीश्वरंमुक्त्वान्यस्यास्ति। तथा होतारमृत्विजमिति सामानाधिकरण्ये होतारमित्यनर्थकं स्यात् । तेनैव च होतुरपिलाभाद्धोतृपदंयजमानपरमेवेत्युचितम्॥ततश्च सार्वात्म्यधर्मेणानुग्राहकत्वधर्मेण चाग्न्युपाधिकोमुख्यईश्वर एवात्र स्तुतो भवति मुख्ययावृत्त्या॥एवमदितिर्द्यौरदितिरंतरिक्षमित्यादावप्यादित्यादिविग्रहोपाधिकस्य ब्रह्मण एव सार्वात्म्यं सिद्धमेव कीर्त्यंते नत्वभूतमदितिस्तुत्यर्थमुपन्यस्यते यजमानः प्रस्तर इत्याद्यर्थवादवत् । अन्यथा मंत्राणामर्थवादानां चाविशेषापत्तिरिति

दिक् । एवमप्याधानगतेष्टिविशेषे सौविष्टकृत्यां संख्याज्ञयां विनियुक्तो मंत्रो ब्राह्मणविद्भिरग्निदेवतापरतयैव व्याख्यातःकर्मसमृद्धयर्थम् । तत्र च नासंकोचेन विशेषणानामन्वय इत्यर्थं एव विदांकुर्वंतु । एवं इषेत्वेति- मंत्रेपि इषे इतीष्यमाणार्थलाभार्थत्वेतिप्रातिपदिकांशेन तत्प्रदानसमर्थं चेतनमुपक्षिपति ॥ द्वितीयाविभक्त्या तस्य उत्पाद्यत्वविकार्यत्वसंस्कार्यत्वलक्षणकर्मत्वासंभवादाप्यत्वमेवोच्यते ॥ तत्रेष्यमाणभेदादभेदाच्चे- त्ययमर्थः प्रतीयेत हे कैवल्यप्रद त्वां कैवल्यार्थं कंठगतविस्मृतचामीकरवदज्ञानमात्रापगमेनावाप्तवान् आप्नवानीति वा हे सार्वात्म्यप्रद त्वां सार्वात्म्यार्थं नदीसमुद्रवत्परिच्छेदाभिमानत्यागादाप्नवानीति वा हे सारूप्यप्रद त्वां सारूप्यार्थं कीटभृंगवत् ध्यानेनाप्नवानीति वा हे स्वर्गप्रद त्वां स्वर्गार्थं कर्मणा ग्रामवदाप्नवानीति वा यत्कृष्णो रूपमित्यत्र वक्ष्यमाणरीत्या हे शाखे शाखावच्छिन्नपरमेश्वर त्वां शाखारूपं इषेन्नाय च्छेदनक्रिययाप्नवानीति वा तत्र पूर्वपूर्वापेक्षया उत्तरोत्तरोर्थो जघन्य इति स्वसंवेद्यम् । अथापि इषेत्वेति शाखामाच्छिनत्तीति अन्नं वा इष इति च ब्राह्मणविदः हे शाखे त्वां अन्नाय च्छिन- त्तीत्यतः परोक्षवृत्त्या व्याचक्षते कर्मसमृद्धयर्थम् । न तावता मंत्रः स्वारसिकमर्थंजहाति । न हि कदा-

चनस्तरसीत्यैंद्र्या गार्हपत्यमुपतिष्ठते इत्यादाविंद्रपदस्य लक्षणया कर्मकाले गार्हपत्योपस्थापकत्वेपि ऋच ऐंद्रीत्वं विहन्यते ॥ ऐंद्र्येत्यस्यानर्थक्यापत्तेः । तस्मान्मंत्राणां स्वारसिकमीश्वरपरत्वम् । सर्वे वेदा यत्पदमामनंतीतिश्रुतेस्तत्संमतम् । क्रियापरत्वं तु विनियोगवशाज्जघन्यप्रवृत्त्येतिसिद्धम् । स एवं भूतो विष्णुः परमकारुणिको नामभिः कर्मभिश्चास्मदादिभिरार्त्तैराहूयमानः स्तूयमानश्च स्वस्य विश्वरूपमर्जुनादिभ्य इवेतरेभ्योप्याविष्करोति॥तद्वारा च वैष्णवंपरमं पदं सत्यादिलक्षणं आत्मीयं प्रापयतीति युक्ततरोयं नियोगो

हरिः ॐ । तन्नेमिमृभवोयथानमस्वसहूतिभिः ॥ नेदीयोयज्ञमंगिरः ॥ १ ॥

यन्मंत्रेषु विष्णोः कर्माणि पश्यतेति॥तस्यैवं फलोपमस्य विष्णोर्नमस्यत्वं स्तुत्यत्वं च विरूपदृष्टौ मंत्रावाहतुः॥ तंनेमिमिति ॥ हे अंगिरः तं परमेश्वरं ऋभवो देवा यथा आनमंति एवं त्वमपि आनमस्व। सहूतिभिः समानैर्योग्यैराह्वानैर्भो भगवन्नमस्त इत्येवं भावयेदित्यर्थः। नेदीयो नेदीयां सुपांसुलुगिति सुपो लुक्। सन्निहितमंतर्यामिणमित्यर्थः । तथा च मन्त्रांतरं अस्ति ज्यायान् कनीयस उपार इति । उपारे समीपे । कीदृशं

तम् । नेमिं संसारचक्रस्य कालचक्रस्य वा आद्यंतशून्यस्यापि नेमिमिव नेमिं परिधिभूतम् । अत्र फलोपमस्य परिच्छेदकत्वे नेम्यादिदृष्टांतः । वृक्षोपमस्य त्वाकाशवत्सर्वगतश्च नित्य इत्यादिदृष्टांतोनुरूप इति बोध्यम् । पुनः कीदृशम् । यज्ञं हविरातिथ्यं निरूप्यते सोमे राजन्यगते इत्युपक्रम्य वैष्णवो भवति विष्णुर्वै यज्ञस्तस्माएतद्धविरातिथ्यं निरूप्य इत्युपसंहारात्सोमाभिमानिनं यज्ञापरनामानं विष्णुम् । तेन

तस्मैनूनमभिद्यवेवाचाविरूपनित्यया ॥ वृष्णेचोदस्वसुष्टुतिम् ॥ २ ॥ यस्मिन्विश्वानिकाव्याचक्रेनाभिरिवश्रिता । त्रितंजूतीसपर्यतव्रजेगावोनसंयुजे ॥ युजेअश्वांअयुक्षतनभंतामन्यकेसमे ॥ ३ ॥

यावान्सौम्यो मंत्रः स सर्वोपि वैष्णव इति गम्यते ॥ १ ॥ तस्मा इति । तस्मै यज्ञापरनाम्ने विष्णवे नूनं निश्चितं अभिद्यवे द्योः अव्याकृताकाशस्य जगत्कारणस्य बीजोपमस्य अभितो वर्त्तमानाय फलोपमाय भो विरूप नित्यया वाचा अपौरुषवेदरूपया सरस्वत्या सुष्टुतिं शोभनां स्तुतिं चोदयस्व प्रेरयस्व । कीदृशाय तस्मै । वृष्णे अभिमतफलवर्षिणे ॥ २ ॥ अथ पौरुषेयीणामपि वाचामयमेव स्तुत्य इत्याह ॥ यस्मिन्निति । यस्मिन्नी-

घर्मोदकेन भुवं क्लेदयंति स्म । एवं श्रमागतमपिगव्यं एते वयं अभीमतः साकल्येन अद्य निश्चितं स्वजन्यं स्वस्य जन्यं स्वाधीनं कर्त्तुं भूम प्रभवाम इत्यालोच्य ते पृष्ठा पृष्ठानि रुरुहुरिवेत्येवार्थः । एकस्य पृष्ठे परस्तस्यापि पृष्ठेऽपर इत्येवंकर्मणारुह्य अत्युच्चस्थानस्थमपि क्षीरादिकं स्वायत्तं कुर्वंत्येवेत्यर्थः॥२५॥एवमनेकैरुपायैर्गव्यमश्नाति भगवति मंत्रस्तदाशयं विवृणोति॥ यं मर्त्यं इति ॥ यं श्रीकृष्णं विश्वात्मानं विश्व-

यंमर्त्यंःपुरुस्पृहंविदद्विश्वस्यधायसे ॥ प्रस्वादनंपितूनामस्तंतातिंचिदायवे॥२६॥

स्य धायसे तृप्तये पुरुस्पृहं बहुकामयंतं अत एव पितूनां नवनीतानां प्रस्वादनं आस्वादानं आस्वादनकर्त्तारमुपलभ्य मर्त्यः आयवे जीवनाय अस्ततातिं गृहस्य पालनं कर्त्तव्यत्वेन विदत् अविदत् ज्ञातवान् । अयमर्थः । यद्येवं बालाः सर्वं गव्यं मुष्णंति तर्हि जीवनलोपो भविष्यतीति गृहसंरक्षणे जनः प्रवर्त्ततां भगवांस्त्वल्पेपि गव्ये मया आस्वादिते त्रैलोक्यसंतर्पणजं पुण्यमेते प्राप्स्यंतीति चौर्येण तदास्वादयतीति ॥२६॥

तमेवं कुर्वाणं निगृह्य गोपीजनो यशोदामानीय वदति । अयं रोचयादेति । अयं तव पुत्रैः अप्रकाशमानान् गोप्यस्थानेपि स्थितान् क्षीरादीन् रसान् रोचयत भोक्तुं रोचयते । पुनश्च रुचानः स्तेनोप्यस्तेनवद्दीप्यमानो धृष्टत्वं करोतीत्यर्थः । अयं उपालभ्यमानः पूर्वीः स्वापेक्षयातिप्रौढा अपि नारीः विवासयत् विवसनाः करोति । एवं व्याकुलीकृत्य पलायत इत्यर्थः । ऋतेन शपथेनैतद्वदामो न तुतद्द्वेषेण । तर्हि वह्नीभिर्मि

अयंरोचयद्रुचोरुचानोऽयंवासयद्व्यृतेनपूर्वीः॥ अयमीयतऋतयुग्भिरश्वैःस्वर्विदानाभिनाचर्षणिप्राः ॥ २७ ॥

लित्वा कुतो न ध्रियते तत आहुः । अयं ऋतयुग्भिर्वेगवाद्भिरिति यावत् । अश्वैरीयते लभ्यते वेगवतोऽश्वादप्याधिकं धावतीत्यर्थः । कीदृशोयम् । स्वर्विदा स्वःभक्षणसुखं विन्दतीति स्वर्वित् तेन सुखमात्रार्थिना नाभिस्थजाठरेण निमित्तेन चर्षणिप्राः चर्षणीः प्रजाः प्रायते लंघयतीति चर्षणिप्राः । रलयोः सावर्ण्यात्प्राः मिप्रार्थी अयं लोकमर्यादां लंघयतीत्यर्थः । वस्तुतस्त्वयमासामभिप्रायः । अयं चिदात्मा स्वयं रुचानः

प्रकाशमानःअरुचः अरोचमानान् जडान् घटादीन् रोचयत् प्रकाशयति । तस्य भासा सर्वमिदं विभातीति
श्रुत्यंतरात् । अयमेव विशेषेण पूर्वीः प्रजाः अव्यक्ताद्याः स्वयमनृताः सतीः स्वेन ऋतेन सत्येन
वासयति । अयमेव जडस्यानृतस्य च प्रपंचस्य स्फूर्त्तिसत्ताप्रद इत्यर्थः । अयं ऋतयुग्भिः सत्येन
वस्तुना संबंधैरिंद्रियाद्यैरंतर्मुखैरिंद्रियैर्मनोमात्रतां गतैरीयते गम्यते स्वविदा नाभिना सगुणब्रह्मो
पलब्धिस्थानेन नाभिना आलंबनीकृतेन ईयते । नाभ्या उपरि तिष्ठति । विश्वस्यायतनं महदिति

**यत्रमंथांविबुध्नतेरश्मीन्यमितवाइव ॥ उलूखलसुतानामवेद्विंद्रजल्गुलः ॥ २८ ॥**

श्रुतेः । चर्षणिप्राः पूरको व्यापक इत्यर्थः ॥ २७ ॥ एवं गोपीभिरावेदिते उलूखले यशोदादाम्नाबध्यमान-
मालक्ष्य ऋषिराह । यत्र मंथामिति । यत्र उलूखले महत्तरमंथां मंथानं सगर्गरं विबध्नते दधिमंथनार्थं
ताहृशे उलूखले बद्धाः सुताः उलूखलसुताः तेषाम् । मध्यमपदलोपी समासः बहुलं पूजायां उलू-
खले बद्धस्य सुतस्य यामितवा इव नियमनायेव रश्मीन् दाम रज्जुः विशेषेण बध्नते मातरः । परं तु रश्मीनिव
बध्नते न तु रश्मिभिः सुतमिति भावः । सुतो बद्ध इति प्रतीतिस्तु तासां भ्रांतिरित्यर्थः । हे इंद्र ईदृशान्

मातृजनान् उ निश्चितं अव इत् प्रक्षैव जलगुलः जडानि गावः इंद्रियाणि येषां ते जडगवाः अतिमूढा
गोपजनाः तान् लाति स्वीयत्वेनादत्त इति जडगुलः। अकारलोपोडकारस्य लकारश्च छांदसः। परिगृहीतानां
पालनमावश्यकमित्यर्थः ॥ २८ ॥ अत्रांतरे बंधनमंगीकृत्य तस्य वैयर्थ्यं मा भूदिति यमलार्जुनमंतरेण सहो
लूखलेन गत्वा उलूखलं च तिर्यक्कृत्वा वृक्षावुन्मूलितवान्। तौ चोन्मूलितौ पुनर्देवताभावं प्राप्य प्रतिष्ठ-

तानोअद्यवनस्पतीऋष्वावृष्वेभिःसोतृभिः॥इंद्रायमधुमत्सुतम् ॥२९॥ कउनुतेम-
हिमनःसमस्यास्मत्पूर्वऋषयोन्तमापुः ॥ यन्मातरंचपितरंचसाकमजनयथास्त
न्वः ९ स्वायाः ॥ ३० ॥

मानौ नलकूवरमणिग्रीवौ व्रजजन आह ॥ तानो अद्येति ॥ भो वनस्पती ता तौ युवां नोस्माकं अद्य ऋष्वौ
रोषणौ उन्मूलितत्वेन क्लेशकरौ ऋष्वेभिः क्लेशदैः सोतृभिः प्रसवकारणैः कर्मभिर्हेतुभिर्जातौ युवां कालेनो-
न्मूलितौ दृष्ट्वास्माकं महद्दुःखं जातमित्यर्थः ॥ तथापि इंद्राय व्रजपतये मधुमत् मधुरं रसं सुतं प्रयच्छंतं
अस्मासु दयां कुरुतामित्यर्थः ॥ २९ ॥ ततः उलूखलात् मात्रा मोचितः सादरमवेक्ष्यमाणः तस्यै वैश्वरूप

त्वं जातो देव जातो गर्भतो बहिराविर्भूतः सन् सद्य इदु सद्य एव चित् निश्चितं खलु दूतो दुनोतीति दूतः मातुः खेदकरो वियोगदुःखप्रदो भवसीत्यर्थः । एतेन देवकीपतेर्वसुदेवस्य गृहे जन्मधृतवानिति सूचितम्।तत्र वैकुंठस्येंद्रस्य वाक्यम् । अहं भुवं वसुनः पूर्व्यस्पतिरिति प्राश्रावयं शवसातुर्वसुंयदुमिति च प्रमाणम् । तत्र हरिवंशे पूर्वं सोमवंशाद्ययातेः सकाशात्यस्य यदोः क्रोष्ट्रादीनारभ्य शूरवसुदेवांतो वंश उक्तः । विकद्रुवाक्ये पुनः सूर्यवंश्याद्धर्यश्वाज्जातस्य यदोरेव माधवादिक्रमेण वसुवसुदेवांतो वंश उक्तः । तत्र यथा ब्रह्मपुत्रस्य वसिष्ठस्य मित्रावरुणाभ्यां पुनर्जातस्यापि नामरूपयोर्भेदः पूर्वान्वयाद्विच्छेदश्च नासीत् एवं ययातितो हर्यश्वाच्च जातस्य यदोरपि ज्ञेयम् ॥ यथा च ब्रह्मपुत्रस्यापि सनत्कुमारस्य कार्तिकेयत्वे स्कंद इति नाममात्रं भिन्नं व्यनक्ति । तमसस्पारं दर्शयति भगवान्सनत्कुमारस्तं स्कंद इत्याचक्षत इति छांदोग्ये दर्शनात् । तथाशूर स्यययात्यन्वयेहर्यश्वान्वयेचजातस्यवसुरिति नाममात्रेण भेदः । तेन वसुदेवस्य शूरपुत्रत्वं वसुपुत्रत्वं च- संगच्छते । अत एवमुदाहृतश्रुत्योरर्थः—अहं वसुनः वसोः सकाशात् भुवं अभवम् । अडभावः शवभावो गुणा भावश्चार्षः।पूर्व्यः आद्यपतिः स्वामी । अविशेषात्कृत्स्नस्य जगत इत्यर्थः । तथाहं शवसा बलेन तुर्वसुं यदुं

प्राश्रावयं प्रकर्षेण श्रावितवानस्मि-यदुवंशीयाः वयमतिबलवत्तरा इति ॥ अत्रतुर्वसुग्रहणं ययातेर्यदुवशंज-
त्वज्ञापनार्थम् । तेन यदुवंशे उत्पन्नस्य देवकीभर्तुर्गृहे भगवानुत्पन्न इति प्रसिद्धम् ॥ ११ ॥ अयं जात
मात्रो मात्रा वियुक्त इत्युक्तं तत्र हेतुमाह ॥ विष्णुमिति ॥ स्तोमासः स्तोमाः । आज्जसेरसुक् । स्तुत्याः महां
तो विष्णुं पुरुदस्मं बह्वायतनं अर्काः अर्भकाः । यामनि भक्तजनेषु प्रेमपीयूषपरिवेषणे ग्मन् । मंत्रेघसेतिले-

विष्णुंस्तोमासःपुरुदस्ममर्काभगस्येवकारिणोयामनिग्मन् ॥ उरुक्रमःककुहोय
स्यपूर्वीर्नमर्द्धन्तियुवतयोजनित्रीः ॥ १२ ॥

लुंक् । गताः प्राप्ताः । यमोपरिवेषणे एव मित्त्वादिह परिवेषणे यमेर्ह्रस्वो न । के इव । भगस्यऐश्वर्यस्य कारिण
इव॥अयमर्थः॥एकः पुत्रमिव प्रेम्णा वस्त्रालंकरणादिना विष्णुमर्हितं करोति अपरो दंडभयाद्राजानमिव।तत्रा
राधनस्यैकरूपत्वेपि भावभेदात् उरुक्रमो उरुर्महांस्त्रैलोक्याक्रमणसमर्थः क्रमः पादविक्षेपो यस्य सः ककुहः
कुहकोस्ति।यतो यस्य पूर्वीर्जनित्रीः प्रथममातरः युवतयः देवक्याद्याः।बहुत्वं कल्पभेदाभिप्रायेण पूजायां वा।

अत्र सुपां सुपो भवंतीति जसः शस्।नमर्द्धन्ति भगवद्दत्तेन महिम्ना उपेता अपि न तत्कर्त्तृकेण प्रेम्णा क्रियंते। तेन प्रेमभक्तेषु गोकुलजनेष्वेव रक्तोभूदिति ॥ १२ ॥ सद्यश्चिज्जात इति य उक्तस्तं जातमात्रं देवा परिवव्रुरि त्याह वसिष्ठः॥ सस्वाश्चिद्धीति॥सस्वर्गः—यन्न दुःखेन संभिन्नं न च ग्रस्तमनंतरम्।अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदमिति श्रुतिनिरुक्तं सुखवतासमानं सस्वः श्रीकृष्णाध्यासितं भूमंडलम्। चिद्धि इत्यनर्थकौ नि-

सुस्वाश्चिद्धितुन्वं१ःशुंभमानाआहंसासोनीलंपृष्ठाअपप्तन् ॥ विश्वंशर्द्धोअभितोमा

निषदनरोनरण्वाःसवनेमदंतः ॥ १३ ॥

पातौ सूचनप्रसिद्धचर्थौ वा। हंसासो हंसाः देवाः आसमंतात् गताः प्राप्ताः तन्वः तनूः शुंभमानाः शोभयंतः। अंशमात्रेण दिव्यरूपधारिण इत्यर्थः। नीलपृष्ठाः। डलयोरैक्यात् नीडं स्वर्गः पृष्ठं येषां ते नीडपृष्ठाः। वृष्टिकरं द्युस्थानमंतरिक्षस्थानं च देवता यूयंअभितः समंतात् मा मां मदभिन्नं निषद निषसाद। अत्र वसिष्ठः मा इति प्रत्यग स्वर्गं स्थित्वा सर्वात्मना भूमिमागता इत्यर्थः। विश्वं कृत्स्नं शर्द्धः। शृधु क्रंदने।

भेदादीश्वरमस्मच्छब्देन निर्दिशति—मामुपास्स्वेति अहं मनुरभवमितीन्द्रवामदेवादिवत् । अत्र दृष्टान्तः।नरो-
नेत्यादि॥ नशब्द उपमार्थे । यथा नरो मनुष्याः सवने पुत्रजन्माद्युत्सवे रण्वाः रमणशीला मदंतो हृष्यंतः सं-
स्क्रियमाणस्य शिशोरभितो निषीदंत्येवं देवाः कृष्णमभितो निषेदुरित्यर्थः॥ १३॥ एवं निषण्णा देवाः
वसुदेवं संबोधयंति ॥ इमे दिव इति ॥ भो मनुज इमे परिदृश्यमानाः दिवः संबंधिनो देवाः अनि-

**इमेदिवोअनिमिषापृथिव्याश्चिकित्वांसोअचेतसंनयान्ति ॥ प्रव्राजेचिन्नद्योगाधम स्तिपारंनोअस्यविष्पितस्यपर्षन् ॥ १४ ॥**

मिषाः निमिषवर्जितत्वेन अत्यन्तं सावधानाः पृथिव्याः सम्बन्धिनं अचेतसं अज्ञं जनं स्वयं चिकित्वांसः
तस्य हितं जानन्तः नयंति एवं कुरुष्वेति शिक्षयंति ॥ तदेवाह ॥ प्रव्राज इति ॥ प्रकर्षेण व्रजते देशसी-
मामुल्लंघ्य गच्छते पुरुषाय नद्यो यमुना तत्संबंधिजलम् । सोःजस्भावःआर्षः।गाधं प्रावृट्कालेपि जानुदघ्न-
मस्ति। अतो नोस्माकं पुरोवर्तिनोस्य शिशोर्विष्पितस्य वेवेष्टि व्याप्नोतीति विट् पाति पिबतीति वा पितः विट्

चासौ पितश्च विष्पितः जगतःसृष्टिस्थितिप्रलयकृत् तस्य।विषशब्दस्यार्षं षत्वम् । कर्मणि षष्ठी । एवंच विष्पितं पारं यमुनायाः परं तीरं प्रापयितुं पर्षन् स्नेहवान् आदरयुक्तो भव । यमुना च तुभ्यं मार्गं दास्यतीति भावः ॥ १४ ॥ ननु कथमितरैरज्ञातेन मयाऽयं पारं नेतुं शक्यः क्व वायं नीत्वा स्थापनीय इत्याकांक्षायामाह ॥ यद्धोपेति ॥ यत्स्थानं गोपावत् गोपालयुक्तं यत्र च अदितिर्मित्रो वरुणश्च सुदासे शोभनाय दानाय-

यद्धोपावददितिःशर्मभद्रंमित्रायच्छंतिवरुणःसुदासे ॥ तस्मिन्नातोकंतनयंदधानामाकर्मदेवहेलनंतुरासः ॥ १५ ॥ इदमुत्प्रत्युरुतमंपुरस्ताज्ज्योतिस्तमसोवयुनावदस्थात्।।नूनंदिवोदुहितरोविभातीर्गातुंकृणवन्नुषसोजनाय ॥ १६ ॥

भद्रं उत्सवादिरूपं शर्म सुखं भद्रं अनामयं च यच्छंति तस्मिन् स्थाने तोकं तनयं आदधाना:आदधानः। भवेति शेषः । तत्र स्थापयेत्यर्थः ॥ भो तुरासः इतस्ततः प्लवमानमनोवेगत्रस्ता देवहेलनं देवानामवज्ञानं मा कर्म मा कुरत । आर्षः पुरुषव्यत्ययः । स्वाभेदविवक्षया वा ॥ १५ ॥ एवं देवैराज्ञप्तो वसुदेवः

कृष्णमानीय नंदागारे यशोदानिकटे स्थापितवान् । तेनैव सह गताः देवाः तत्र भगवतः स्वरूपं वर्णयंति॥ इदमुत्प्रोति त्रिभिर्मंत्रैः ॥ इदं शिशुरूपेण दृश्यमानं नूनं निश्चितं तत् वेदांतप्रसिद्धं ज्योतिश्चिन्मात्रं पुरुतमं भूमसंज्ञं तमसः तमःकार्यात् संसारात् तत्कारणादव्याकृताच्च पुरस्तात् पूर्वं उदस्थात् उत्थितं नित्यमाविर्भूतं वयुनं प्रशस्तं कर्म दुष्टनिग्रहशिशुपालनरूपम् । दैर्घ्यं. सांहितिकं—वयुनावत् भवितुं जातमित्यर्थः ।

अस्थुरुचित्राउषसंःपुरस्तान्मिताईवस्वरवोध्वरेषु ॥ व्यूव्रजस्यतमसोद्वारोच्छन्तीरव्रंछुचयःपावकाः ॥ १७ ॥

उषसः उषोभिमानिन्यो देवताः गां तु पृथिवीं कृणवन् अलंचक्रुः । अथेति शेषः । जनाय दुष्टनिग्रहादिना जनहितायेत्यर्थः। कीदृश्य उषसः। दिवो दुहितरः। अव्याकृताकाशाज्जाता इत्यर्थः। अतएव विभातीः विशेषण भांत्यः॥१६॥ अस्थुरुचित्रा इति ॥ पुरस्तादितः पूर्वं चित्राःउपसःअस्थूलार्थकराः उषःकालाः स्थिताः॥तथापि ताःमिता इव परिच्छिन्ना एव।अलपानंदकरत्वात्। अद्यतनीउपाअखडानंदप्रकाशिकेत्यर्थः।

मितत्वेदृष्टांतः।अध्वरेषु स्वरवइव यूपैकदेशप्रादेशमात्रकाष्ठतुल्या इत्यर्थः।एतास्तु व्रजस्य व्रजसंबंधिनस्तमसो मूलाज्ञानस्य पोषकाणि द्वाराणि देहाद्यभिमानान् उ निश्चितं व्युच्छंतीः वैपरीत्येन प्रकाशयन्तीःअव्रन्,व्रतवत्यः याः शुचयः पावकाः शुद्धिकर्त्र्यः। अहो व्रजस्य भाग्यमखंडं ब्रह्म प्राक्कचिदप्यनाविर्भूतमाविरभूदिति भावः ॥१७॥ न केवलं व्रजस्य भाग्यं अपि तु भोजोपलक्षितानां वृष्ण्यंधकयादवानामपीत्याह ॥ उच्छन्ती

उच्छन्तीरुद्यचितयतभोजान्राधोदेयायोषसोमघोनीः ॥ अचित्रेअन्तःपणयः ससंत्वबुध्यमानास्तमसोविमध्ये ॥ १८ ॥

ति ॥ अद्य भोजान् उच्छंतीः कंसेनाभिभूतान् भोजान् प्रकाशयंतीः उषसः अचितयत जानीत राधोदेयाय धनप्रदानाय मघोनीःधनवतीः।अत्र व्रजस्य तमसो द्वारा व्युच्छंतीरिति भोजान् राधोदेयाय उच्छंन्तीरिति च व्रजस्याज्ञानापगमेन परमपुरुषपुरुषार्थभागित्वं भोजानां श्रीकरत्वेनावरपुरुषार्थभागित्वं चोक्तम्।तत्र कारणं प्रागेवोक्तं विष्णुं स्तोमास इत्यत्र। तथा अचित्रे अचमत्करणीये महामोहमये तमसि विमध्ये अन्तः। स्थिता

इति शेषः।पणयोऽसुराः ससंतु स्वपंतु यथा अबुध्यमानाः।स्वहितमिति शेषः।तदेवं मंत्रत्रयेण क्रमात्कृष्णस्यां विर्भावो जनस्योपकाराय व्रजस्य कैवल्याय भोजानां राज्यादिलाभार्थं चेत्युक्तम् ॥ १८ ॥ अथ रामकृष्णयोः सूत्रांतर्यामिरूपयोः साहचर्यमाह॥ अपाङिति ॥ स एवं अपाङ् प्रत्यङ् सन् प्राङ् परागिव एति अन्तरात्मापि सन् बहिर्भावेन पुरुषांतररूपेण चरति।कुतः। स्वधया लोकानां पुण्येन कर्मणा गृभीतो वशी-

अपाङ्प्राङेतिस्वधयागृभीतोमर्त्योमर्त्येनासयोनिः ॥ ताशश्वंताविषूचीनावियंतान्यंऽन्यंचिक्युर्ननिचिक्युरन्यम् ॥ १९ ॥

कृतः सन् अमर्त्यः कृष्णोंतर्यामी मर्त्येन कृत्स्नकायाभिमानिना सूत्रात्मना रामेण सयोनिः समानायां योनौ उदरे स्थाने वा भवतीति सयोनिः सोदर्यः सहचरंतावुभावपि रामकृष्णौ शश्वंता शश्वद्भवौ। यो वै तत्काप्यसूत्रं विद्यातं चांतर्यामिणामिति प्रसिद्धौ सूत्रांतर्यामिणौ। विषूचीना विष्वंचौ व्यापकौ वियंता विविधप्रकारेण यंतौ चरंतौ तयोरन्यं एकं सर्वे जना निचिक्युः कार्यरूपत्वाज्जानंति ज्ञातवंतः प्रांच इति वा। सूत्रा-

त्मनोपि शास्त्रैकसमधिगम्यत्वात् अन्यं कृष्णं न निचिक्युः इदंतया न जानीयुः प्रत्यगात्मत्वेनाविषयत्वात् गोपजना इत्यर्थः ॥ १९ ॥ हरिवंशक्रमेण प्रथमं शकटासुरभंगमाह । पृथुरिति । दक्षिणायाः दक्षिणादिक्संबंधी मृत्युदूत इत्यर्थः। रथः शकटं अयोजि नियुक्तम्। असुरैरिति शेषः। एनं अमृतासः अमृता देवासः देवाः आसमंतात् अस्थुः परिवार्य स्थितवंतः न तु भंक्तुं अशक्नवन्नित्यर्थः । स रथः कृष्णात् कृष्णं

पृथुरथो दक्षिणाया आयोज्यैनं देवासो अमृतासो अस्थुः॥ कृष्णादुदस्थादार्या

विहायाश्चिकित्संती मानुषाय क्षयाय ॥ २० ॥

प्राप्य विहायाः आकाशात्तं प्रति उदस्थात् उत्थितः । कृष्णेनांतरिक्षउत्क्षिप्त इत्यर्थः।तदा मानुषाय मनुष्यरूपस्य कृष्णस्य क्षयाय नाशेपि विषये चेकित्संती विचिकित्संती संदिहाना आर्या श्रेष्ठा सर्वा प्रजाअभूदिति शेषः । कथमेतच्छकटमुत्क्षिप्तं कथं वानेन सन्निहितोपि शिशुर्न मर्दित इत्याश्चर्यममन्यतेत्यर्थः ॥ २० ॥

शकुनिरूपायाः पूतनाया वधमाह । हेतिरिति । हेतिरिव हेतिरायुधवन्मृत्युरूपा पक्षिणीअस्मान्अभिभवितुमा-
यातापि न दभ्नाति नाभिभवति प्रत्युत अग्निधाने अग्निरूपस्य कृष्णस्य धाने पाने तर्पणे निमित्ते आ असुग-
तिदीप्त्यादानेषु । अस्माणिणजंतात्तृच् । दीपयंत्यां अग्नीप्रिकायां पदं स्थानं कुरुते कृष्णाय स्तनदानव्याजेन
वह्नावेवपपातेत्यर्थः । एवमुक्त्वा शांतिं पठंति शन्न इति नोस्माकं गोभ्यः पुरुषेभ्यश्च शं कल्याणमस्तु ।

हेतिःपक्षिणीनदभात्यस्मानाष्ट्यापदंकृणुतेअग्निधाने ॥ शन्नोगोभ्यश्चपुरुषेभ्यश्चा-
स्तुमानोहिंसीदिहदेवाः कपोतः ॥ २१ ॥ साकंयक्ष्मप्रपतचाषेणकिकिदीविना ॥
साकंवातस्यध्राज्यासाकंनश्यनिहाकया ॥ २२ ॥

भो देवाः कपोतो मृत्योर्दूतोस्मान्मा हिंसीदिति ॥ २१ ॥ वात्यारूपिणा तृणावर्त्तेन कृष्णे विहायसा नीते
देवास्तं शपंति।साकमिति।हे यक्ष्म महारोग वात्यारूपराक्षस चापेण चापवर्णेन शिशुना किकीत्यव्यक्तभाषणेन
दीव्यता क्रीडता किकिदीविना कृष्णेन त्वत्प्रपतनहेतुना साकं सार्द्धं त्वं प्रपत अंतरिक्षात् च्युतो भव ।

तथा वातस्य ध्राज्यायांसुरेषया सोमस्पर्शिन्या वात्यया साकं सद्य एव नश्य नष्टो भव। तथा निहाकया नितरां हा इति कायति शब्दं करोत्यनयेति निहाका तीव्रवेदना तया साकं नश्य। नष्टे च त्वयि भगवानस्मदीयो यथेष्टं विहरत्विति भावः। एवमुक्तमात्रे तत्तथैव जातमिति ज्ञेयम् ॥ २२ ॥ ततस्त्रिचतुर्वार्षिकं कृष्णं गव्यार्थिनो गोपाः प्रार्थयंते। अग्निं तं मन्यत इति सूक्तेन। तत्रायं मंत्रः। नवान इति। हे अग्ने जाठररूपेणा-

नवांनोअग्नआभंरस्तोतृभ्यंः सुक्षितीरिषंः ॥ तेस्यांमयआंनृचुस्त्वादूंतासोदमेंदम इषंस्तोतृभ्यआभंर ॥ २३ ॥

तस्थ भगवन् नोऽस्मभ्यं स्तोतृभ्यः नवाः क्षीरमंडदधिमस्तुनवनीताद्या यज्ञेप्यप्राप्ता इषोऽन्नानि आभर आहर सुक्षितीः कल्याणभूमीः । याभिर्भक्षिताभिरायुःसत्त्ववलारोग्यादिकं भवति तादृशीभिरित्यर्थः। कथमेतालभ्यंत इत्यत आहुः। तइति । ये देवास्त्वां पुरा आनृचुः स्तुतवंतः। त एव वयं दमे दमे गृहे गृहे त्वादूतासः त्वद्दूताः स्याम यस्य गृह्यंयद्यदस्ति तत्तत्तुभ्यं निवेदयिष्याम इत्यर्थः। इषं स्तोतृभ्य आभरेति पुनर्वचनमाद-

रार्थम् ॥ २३ ॥ एवं तेषामिष्टमनुतिष्ठतामपि यदा वंचयते तदा त एनमुपालभंते । उभे इति । हे सुश्चंद्र
सुतरामाह्लादकेति साकूतं संबोधनम्। त्वं उभे सर्पिषां पूर्णे दर्वी दर्व्यौ स्वस्यैवासनि आस्ये श्रीणीषे मिश्रयसि
नत्वेकामपि बहुभ्योस्मभ्यं प्रयच्छसि एवं मा कुर्वित्यर्थः । उतो अपिचनः अस्मान् उत्पुपूर्याः उत्कर्षेण
पूरितवानसि हविष्यैः पूर्वं उक्थेषु तथा इदानीमपि पूरयस्वेत्यर्थः। शवसः बलस्य पते स्वामिन्निषंस्तो

उभेसुश्चंद्रसर्पिषोदर्वीश्रीणीषआसनि ॥ उतोनउत्पुंपूर्याउक्थेषुंशवसस्पतइषं
स्तोतृभ्यआभर ॥ २४ ॥अवस्वयस्यवेषणेस्वेदंपथिषुजुह्वति ॥ अभीमहस्वजं
न्यंभूमापृष्ठेवरुरुहुः ॥ २५ ॥

तृभ्य आभर । यद्वा उभे अपि दर्व्यौ त्वमेव आसनि श्रीणीषे पिबास्मांस्तर्पयसीत्याश्चर्यमित्यर्थः । किंबहुना
त्वयि तुष्टे त्वत्प्रीतिविनानामस्माकं तुष्टिरर्थसिद्धेति भावः ॥ २४ ॥ अवस्वेति । यस्य नवनीतादेः वेषणे
अवस्थापने व्यवस्थार्थं स्वेदं घर्मोदकं पथिषुमार्गेषु गोपाः क्षीरादिभाजनानि वहंतो जुह्वति स्म श्रमजेन

प्रविष्टमित्यर्थः ॥ ९ ॥ एवं सर्वोपायैरामकृष्णाभ्यां पाल्यमानानां, गवां महाभाग्यमसहमानो ब्रह्मा वत्सान् वत्सपांश्च हृतवान् तदा स्वयमेव भगवान् सर्ववत्सवत्सपाकारो जातः । तं गावः गोप्यश्च ज्ञातवत्यः न तु ब्रह्मेत्याह द्वाभ्याम् ॥ हिंकृण्वतीति ॥ अत्र जात्यभिप्रायेणैकवचनम् । सर्वापि गौर्गोपी च स्वं स्वं पुत्रं दृष्ट्वा प्रेमातिशयात् हिंकृण्वती हिंकारं मूर्ध्नि आघ्राणं च कुर्वती वसुपत्नी वसुः वसुवंश्यो राजा पतिः पालयिता यस्याः

हिंकृण्वतीवसुपत्नीवसूनांवत्समिच्छंतीमनसाभ्यागात् ॥ दुहामश्विभ्यांपयोअघ्न्येयंसावर्धतांमहतेसौभगाय ॥ १० ॥

सा वसुपत्नी । न चात्राष्टौ वसवो वसुपदार्थमात्राः । रुद्राणां दुहिता वसूनामिति अन्यत्र वसुदुहितृत्वेन श्रुताया वसुपत्नीत्वायोगात् । वसुश्च हर्यश्वादिक्रमेण शूरापरपर्यायो वसुदेवस्य पितेति प्रागेव व्याख्यातम् । ततश्च सुराज्ञां वत्सवंशोद्भवं कृष्णं स्वं स्वं वत्सीभूतमिच्छंती मनसा अभ्यागात् मनसैव ज्ञातवती अयमिदानीं विष्णुदेवो वत्सरूपेण पातीति । एवमेवास्मिन्यज्ञे मन्यमाना धेनुः दुहां दोग्ध्रीणां मध्ये अघ्न्या अविघातिनी

वेद स ऋचा केवलं अधीतया किं करिष्यति। न किमपीत्यर्थः। य इत् य एव पुरुषधौरेयाः तद्विदस्त इमे नारदाद्याः समासते सम्यक् बाह्यैराभ्यंतरैर्वा शत्रुभिरनभिभूताः संतः आसते ॥ ८ ॥ एवमुक्तमात्रो रामः प्रलंबे स्वसामर्थ्यमाविश्चकारेत्यृषिराह॥विष्टंभ इति॥पृथिव्याः धरुणो धर्ता शेषावतारो रामः प्रलंबस्कंधस्थः सन् दिवो द्युलोकशिविरस्य विष्टंभो मध्यमस्तंभ इव वर्द्धत इत्यर्थः। तत्र हेतुः। विश्वाः सर्वाः क्षितयः

विष्टंभोदिवोधरुणःपृथिव्याविश्वाउतक्षितयोहस्तेअस्य॥ असत्तउत्सोगृणतोनि युत्वान्मध्वोअंशुःपवतइंद्रियाय ॥ ९ ॥

ऐश्वर्याणि उत अपि अस्य हस्ते संविधेयानि सन्ति। हे सोमात्मक विष्णो एवंरूपो यतस्त्वमसि अतो मध्वः मधोः आदिदैत्यस्य अंशुरिवांशुर्दीर्घः प्रलंबनामा अंशः ते तव पुरः इंद्रियाय वीर्यप्रकटनाय पवते शीघ्रं यतते यः स नियुत्वान् नितरां यौति युज्यत इति नियुत्प्राणः तद्वान् बलवानपि भारात्तंतया उत्सः उत्सन्नः सन् गृणते मां मुंचेति प्रार्थयते। एवमप्यस्य रूपं असदेव भवति रामभरेण कीलवद्भूमेरंतः

ब्रह्मास्मि तदहं न विजानामीव देहावेशात्प्रमाद्यतीति न्यायेन जानन्नपि न जानामि इत्यर्थः । त्वदनुग्रहं विना स्वीयमैश्वर्यं आविर्भावयुतं न शक्नोमीति भावः।कुत एवम् । मनसा बंधनेन सन्नद्धः पारवश्यं प्रापितः।अत एव निण्यः परप्रणेयः सन् चरामि यदा काले मा मां ऋतस्य वेदस्य प्रथमजाः कारणभूतः परमात्मा आगन् आगच्छेत्तदा आत् अस्मात् अस्यानुग्रहं प्राप्य इत् निश्चितं अस्याः वचः सकाशात् भागं निर्विंद्यतेस्मिन्निति

ऋचोअक्षरेपरमेव्योमन्यस्मिन्देवाअधिविश्वेनिषेदुः ॥ यस्तन्नवेदाकिमृचाकरिष्य तियइत्तद्विदुस्तइमेसमासते ॥ ८ ॥

भागः परमात्मा तं अश्नुवे व्याप्नुयाम् ॥ तं गुरुं प्राप्य तत्त्वमसिवाक्यस्यार्थमैकात्म्यं,लभेयमित्यर्थः ॥ ७ ॥ ततः कारुणिको भवान् अपाङेतीति प्राग्व्याख्यातेन मंत्रेणायमहमास्मि तव भ्रातेति राममाश्वास्यानंतरमंत्रेणास्मै वाचस्तत्त्वं निवेदयति । ऋच इति । ऋचः सर्वाः अक्षरे व्यापके परमे व्योमन् अव्याकृतजगत्कारणे पर्यवसन्नाः । यस्मिन्व्योम्नि विश्वेदेवाः इंद्राद्याः इंद्रियाणि वा निषेदुः निषण्णाः संति यस्तत् न

बभूव ॥ ५ ॥ अथ खराकारं धेनुकं व्रजनाशायोद्यतमभिलक्ष्य लोको राममाह । समिंद्रेति । हे इंद्र ईश्वर त्वं गर्दभं संमृण सम्यक् नाशय । कीदृशम् । अमुया अनया त्वत्प्रत्यक्षया पापया क्रियया खरतन्वा नुवंतं पीडयंतम् । धातूनामनेकार्थत्वात्कर्णाटकभाषाप्रसिद्धेश्च नुवतिरत्रपीडार्थः । पापयामुयेत्युभयत्र सुपो या । हे इंद्र तु पुनः नोऽस्मान् गवादिषु आसंशत तथा लोके अस्मानभिलक्ष्य तादृशो गोपानहं भूयास-

समिन्द्रगर्द्दभंमृंणनुवंतंपापयामुया ॥ आतूनइन्द्रशंसयगोष्वश्वेषुशुभ्रिषुंसहस्रेषुतु वीमघ ॥ ६ ॥ नविजानामियदिवेदमास्मिनिण्यःसन्नद्धोमनसाचरामि ॥ युदामाग न्प्रथमजाऋतस्यादिद्वाचो अश्नुवेभागमस्याः ॥ ७ ॥

मिति जन आशास्ते तथास्मान्कुर्वित्यर्थः । शुभ्रिषु शुभ्ररूपवत्सु । सहस्रेषु अनंतेषु तुवीनि पूर्णानि मघानि धनानि यस्मिन्निति तुवीमघ।दैर्घ्यं सांहितिकम् । एवमुक्तमात्रे रामस्तं जघानेति ज्ञेयम्॥६॥ अथ गोपरूपिणा प्रलंबासुरेण ह्रियमाणो राम आह॥नविजानामीति॥इवशब्दो भिन्नक्रमः।यदिदं अपरिमितशक्तिकं

उभयत्र मंत्रे घसेति लेर्लुक्।गमहनजनेति गमेरुपधाया लोपः। संयोगान्तस्य लोपश्चोभयत्र। अतः परं भवत्यः गोष्ठे सीदंतु उपविशन्तु । अस्मे अस्मान् रणयंतु रमयंतु प्रजावतीः प्रजावत्यः पुरुरूपाः श्वेतरक्तपाटला-द्यनेकरूपवत्यः इह स्युः भवंतु पूर्वीः देवलोकश्च।इंद्रायसान्नाय्यभोक्रेनित्याग्निहोत्रेवाग्नेःपूर्वाहुतिःप्रजापतेरुन्नरैंद्रहुतमितिश्रुतेः।प्रत्यहं उषसः उपःकालान्।अत्यंतसंयोगे द्वितीया।दुहानाः दोहं ददत्यः।स्युरित्यपकृष्यते।

इंद्रोयज्वनेपृणतेचशिक्षत्युपेद्ददातिनस्वंमुषायाति ॥ भूयोभूयोरयिमिदस्यवर्धयन्नभिन्नेखिल्येनिदधातिदेवयुम् ॥ २१ ॥

॥२०॥इन्द्रमिति॥इंद्रो देवता यज्वने यजनशीलाय पृणते ददते च यजमानाय शिक्षति कल्याणं पंथानं दर्शयति उपेत् समीप एव अविलंबेनैव ददाति स्वं क्रतुफलं न तु मुपायति मुष्णाति। अव्यभिचारेण क्रतुफलप्रद इत्यर्थः।भूयोभूयोधिकं अस्य यजमानस्य रयिं धनं इत् एव वर्धयन् तमेव देवैर्यौति संयुज्यत इति देवयुस्तं देवानां भक्तं अभिन्ने शत्रुकृतभेदरहिते खिल्ये समुदाये निदधाति । तस्मै सा जनायाधिपत्यं

क्रीडास्थानानि गमध्यै गंतुं उश्म कामयामहे यत्र येषु वास्तुषु गावो भूरिशृंगाः महाशृंगाः अयासः अयन्ति संचरन्ति । अत्र अस्मिँल्लोके अह प्रसिद्धं तत् उरुमायस्य महाकीर्तेः वृष्णः परमानंदवर्षिणः परमं महत्पदं स्थानं भूरि अत्यंतं अवभाति अवभासते ॥ १८ ॥ एवं मनोरथं कृत्वा तेषु भूमावागतेषु इंद्रं ज्येष्ठत्वेनाहुमानयन् श्रीभगवानुवाच ॥ ऋषभमिति ॥ हे इंद्र मां समानानां सजातीनां क्षत्रियाणामृषभं श्रेष्ठं कुरु

ऋषभंमांसमानानांसपत्नानांविषासहिम् ॥ हंतारंशत्रूणांकृधिविराजंगोपतिंगवाम् ॥ १९ ॥ आगावोअग्मन्नुतभद्रमंक्रन्त्सीदंतुगोष्ठेरणयंत्वस्मे ॥ प्रजावतीःपुरुरूपा इहस्युरिंद्रायपूर्वीरुषसोदुहानाः ॥ २० ॥

सपत्नानां शत्रूणां विषासहिं युद्धे सहनसमर्थं हंतारं शत्रूणां कृधि । तथा विराजं विशेषेण राजमानं कृधि । तथा गोपतिं मां गवां च विराजं कृधि ॥ १९ ॥ ततो गोभिरिंद्रेण च गवां राज्येभिषिक्तो विष्णुस्ताः स्तौति द्वाभ्याम् ॥ आगाव इति ॥ गावः आग्मन् आगताः उत अपि च भद्रं मम पट्टाभिषेकं च अक्रन् कृतवत्यः।

भागार्थं तत्र रत्नं जातौ यदुत्कृष्टं वस्तु तत्सर्वं दधाति निदधाति । कीदृश्यै विशे । भरहूतये भरस्य शैल-
भारस्य हूतिराह्वानं अंगीकरणं यस्याः सा भरहूतिस्तस्यै ॥ १६ ॥ तमस्येति ॥ तं अस्य कृष्णस्य क्रतुं
गिरियज्ञं वरुणो राजा तथा अश्विनौ देवौ तं क्रतुं सचंत अनुकृतवन्तः । मारुतस्य जगतां प्राणस्य वेधसः
विश्वस्रष्टुः इन्द्रादन्येषां देवानां स क्रतुः सुखकरोभूदित्यर्थः । यत्र निमित्तं दृढं अहर्विदं क्रतोर्लब्धारं पर्वतं

तमस्यराजावरुणस्तमश्विनाक्रतुंसचंतमारुतस्यवेधसः ॥ दाधारदक्षमुत्तममह
र्विदंव्रजंचविष्णुः संसखिवांअपोर्णुते ॥ १७ ॥ तावांवास्तून्युश्मसिगमध्यैयत्र
गावोभूरिशृंगाअयासः ॥ अत्राहतदुरुगायस्यवृष्णःपरमंपदमवभातिभूरि ॥ १८ ॥

उत्तमं दाधार विष्णुः । हस्तेनेति शेषः । व्रजं तेनैव अहर्विदा शैलेन अपोर्णुते आच्छादयति यतः सखिवान् ।
मित्राणां त्राणार्थमित्यर्थः ॥ १७ ॥ एवं गवां त्राणे कृते भग्नदर्पः इंद्रःउपकृताः सुरभ्यादयो गावश्च प्रीताः
संभूय व्रजं प्रति आगंतुं प्रार्थयंते ॥ तावामिति ॥ ता तानि वां युवयोः रामकृष्णयोर्वस्तूनि

अहन्येभिः अहं क्रतुं अर्हद्भिर्हेतुभिः । ऐन्द्रमहमुत्साद्य पर्वतमहे प्रवर्तिते सतीत्यर्थः । वरिष्ठं उरुतमं वज्रं वज्रप्रायं वर्षं मायिनि मायामृगीनर्त्तके कृष्णे अक्तुभिः पुराणतः सप्तभी रात्रीभिः परिमितेन कालेन आजिघर्त्ती सर्वतः क्षरति सप्तरात्रपर्यंतं गोकुलोपरि कल्पांतवर्षसमं वर्षं चकारेत्यर्थः । मायी तु अद्दा अहानि प्रक्तून् विवर्तयन् विपरीतं वर्तयन् कुर्वन्नेव।अस्ते इति शेषः।तस्माद्वर्षान्न भयं चकारेति भावः ॥१५॥ तामस्येति।तां

तामंस्यरीतिंपरुशोरिंवप्रत्यनीकमख्यंभुजेअंस्यवर्पसः ॥ सच्चायदिंपितुमंतांमिव क्षयंरत्नंदधांतिभरंहूतयेविशे ॥ १६ ॥

महता वर्षेण व्रजो नाशनीय इत्येवं रूपां अस्य इंद्रस्य रीतिं क्रियां प्रकारं परशोरिव केवलं जीवनच्छेदकरीमालोच्य अस्य इंद्रस्य प्रत्यनीकं तदीयभागहर्तृत्वेन शत्रुं पर्वतं अस्य सप्तवार्षिकस्य वर्पसः स्वरूपस्य भुजे।धृतामिति शेषः।अख्यं अपश्यं न त्वयं पर्वतं धर्तुं तदा वामनवद्देहेन वृद्धिं प्रापेत्यर्थः । स चा सख्या गोपवृंदेन निमित्तेन यदि यदापि तुमंतं अन्नवंतं क्षयं निवासमिव गोवर्द्धनमकरोत् तदा विशे प्रजायै प्रजानां

आकृष्णेनेति । कृष्णेन कृष्णशब्दितेन रजसा रंजकेन एष ह्येवानंदयतीति श्रुतिप्रसिद्धेन सता हेतुना आवर्त्तमानः सविता देवो यातीति वदंत्या को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनंदो नस्यादिति श्रुत्यंतरप्रसिद्धं सवितुश्चालकं कृष्णं रजस्ततः पृथगिति दर्शितम् ॥ न च कृष्णेनेति रथेनेत्यस्य विशेषणं संभवति॥व्यवहितत्वात् । कृष्णं भा इत्यदाहृतश्रुत्यंतरविरोधाच्च। सौर्यत्वंत्वृचोर्दिवाकीर्त्यत्वादौपचारिकम्।लिंगादर्शनात्।

यत्कृष्णोरूपंकृत्वाप्राविंशुस्त्वंवनस्पतीन् ॥ ततुस्त्वामेंकविंशतिधासंभंरामि सुसंभृता ॥ ७ ॥

शेषंस्पष्टार्थम् ॥ ६ ॥ अत्रैव मंत्रांतरमुदाहरति । यत्कृष्ण इति । हे भगवन् यत् यस्मात्त्वं कृष्णः सत्यानंदस्वरूपोपि मायाया रूपंरूपवज्जातीयं वियदादिकं कृत्वा निर्माय वनस्पतीन् स्थावरं जंगमं च प्राविशः प्रविष्टवानसि । एतेन तत् सृष्ट्वा तदेवानुप्राविशदित्यस्याः श्रुतेरर्थो दर्शितः। यतःप्राविशस्ततो हेतोर्वनस्पतिभ्यः सकाशात् त्वां तदंतःप्रविष्टं संभरामि चिन्मया एव समिध आचिनोमीत्यर्थः॥सुसंभृता सम्यगाभरणवता

तमरु एशतः पुरो भाः इति शास्त्रप्रसिद्धं सत्यानंदस्वरूपं भाःशब्दितं ज्योतिर्गायत्र्यामपि भर्गशब्दोदितं नियानं यांत्यत्रेति यानं नि हीनं यानमस्य नियानं भूतलस्थायि अनुलक्ष्य सुपर्णाः शोभनपतनाः हरयः यज्ञभागहराः संतो ये दिवमुत्पतंति क्षणमपि भूमौ न तिष्ठंति तेपि देवा अपोवसानाः पंचम्यामाहुतावापःपुरुषवचसो भवन्तीति श्रुतेरपशब्दितैर्मानुषैः शरीरैराछादिता इत्यर्थः । आववृत्रन् कृष्णं समंताद्भोपयादवादिरूपेणावृत्य

आकृष्णेनरजंसावर्तमानोनिवेशयंन्नमृतंमर्त्यंच ॥ हिरण्ययेनसवितारथेनादेवोयांतिभुवंनानिपश्यंन् ॥ ६ ॥

स्थिता इत्यर्थः॥वृतु वर्तने झस्य रन् । ऋतस्य कर्मफलस्य सदनात् भोगस्थानात् स्वर्गात् । एत्येति शेषः । तदेव सदनंस्तौति।आदित्।अस्मादेव ऋतस्य सदनात् घृतेन जलेन पृथिवी व्युद्यते वृष्टिद्वारा क्लिन्ना क्रियते।स्वर्गवासापेक्षया कृष्णसान्निध्यं श्रेय इति मत्वा सर्वे देवाः भूमौ वासमरोचयंतेत्यर्थः॥ ५॥ नन्विद्रं मित्रसौर्याविति द्वयोरप्यनयोर्मंत्रयोः सूर्यदैवत्यत्वं स्मर्यते।तत्कथं सूर्यांतवर्ति ततोन्यत् सदभिधं कृष्णं वस्त्वित्याशंक्याह ।

अत्र काव्या श्रिता इत्यात्वं जूतीइति पूर्वसवर्णदीर्घश्च विभक्तेः सुपांसुलुगित्यनेनैव ॥३॥ यो नमस्यः स्तुत्यः सर्वाश्रयश्च तस्य स्वरूपं अस्यवामीये सूक्ते मंत्रद्वयेन दर्शयति ॥ इंद्रं मित्रमिति । यदिदं सदेव सोम्येदमग्र आसीदिति वेदांतप्रसिद्धम् एकमद्वितीयं सत् तदेव विप्राः विद्वांसः बहुधा बहुप्रकारेण वदंति कथयंति । तमेवेंद्रं मित्रादिरूपं चाहुः ॥ यश्च सुपर्णो गरुत्मान् दिव्यो द्योतमानः तं—तथाग्न्यादींश्च तमेवाहुः ॥ अत्र

इन्द्रंमित्रंवरुणमग्निमाहुरथोदिव्यः ससुपर्णोगरुत्मान् ॥ एकंसद्विप्राबहुधावदंत्यग्निंयमंमातरिश्वानमाहुः ॥ ४ ॥ कृष्णन्नियानंहरयः सुपर्णाअपोवसानादिवमुत्पतन्ति ॥ तआववृत्रन्त्सदनादृतस्यादिद्घृतेनपृथिवीव्युद्यते ॥ ५ ॥

आहुर्वदन्तीत्यभ्यासोर्थस्य भूयस्त्वं द्योतयति । अहो दर्शनीयाऽहो दर्शनीयेतिवत् ॥ ४ ॥ कृष्णमिति । यदेवं सर्वदेवतारूपं सत् तदेव कृष्णं सूर्यमंडलांतर्वर्ति । कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं—तदमस्तत्साम, कृष्णं

श्वरे विश्वा विश्वानि सर्वाणि काव्या काव्यानि व्यासवाल्मीकिप्रभृतिभिः कृतानि भारतरामायणादीनि श्रिताश्रितानि पर्यवसन्नानि। एतेषां प्रतिकल्पं वर्णानुपूर्वीभेदेपि अर्थतो भेदाभावान्नित्यत्वमभिप्रेत्योक्तं वेदेपि यस्मिन्काव्यानि श्रितानीति। तत्र दृष्टांतः। चक्रे नाभिरिवेति॥ यथा नाभिश्चक्रस्यैकदेशं व्याप्नोति एवं काव्यानि एनं लेशत एव वर्णयंतीत्यर्थः। तमेतं त्रितं त्रयाणां गुणानां तनितारं मायाया अपि स्रष्टारं जूती जूत्या मत्या। ध्यानेनेति यावत्। धृतिर्मतिर्मनीषा जूतिः स्मृतिः संकल्प इति धीवृत्तिषु जूतिशब्दस्य पाठात्। सपर्यत पूजयत। कम्। येन व्रजे गोकुले गावः प्रसिद्धाः नशब्द इवार्थे। संयुजे समिति एकीभावं न युज्यत इति संयुक्त तस्मै पित्रे। स हि जातकर्मणि आत्मा वै पुत्रनामासीति मंत्रं पठन्नभेदाध्यासेन पुत्रं स्पृशति। पितुः प्रियार्थं यथा गोकुले गावो रक्षिता एवं युजे संख्ये अर्जुनप्रियार्थं अश्वान् तस्यैव रथे तुरगान् अयुक्षत योजितवान्। अर्जुनस्य सारथ्यं कृतवानित्यर्थः।उभयत्र प्रयोजनं—नभंतामन्यके सम इति। कुत्सिता अन्यके दुःशत्रवः समे सर्वे नभंतां हिंस्यंतामिति। मा भूवन्नन्यके सर्वे इति यास्कः। अत्र युजेसंयुजेपदाभ्यां अर्जुननंदावेव गृहीतुं युक्तौ॥पुराणेतिहासप्रामाण्याद्व्रजादिपदांतरसमभिव्याहाराच्चेति सहृदया एव विदांकुर्वंतु।

भावेन । एकविंशतिभेत्येकविंशोयं पुरुष इति संख्यासामान्यादिध्मस्याप्यात्मरूपत्वं दर्शितम् । एतेन ओषधे त्रायस्वैनं शृणोत ग्रावाणः इत्यचेतने प्रयोजनसंबंधोपि तत्तदंतःप्रविष्टचेतनाभिप्रायेण नत्वचेतनांशाभिप्रायेणेत्यपि सर्वत्र ज्ञेयम् ॥ ७ ॥ कुतो हेतोर्भगवान् भूमाववततारेत्यत आह ॥ उतमातेति ॥ माता आदितिः । पृथिवीति यावत् । द्यौः पिता पृथिवी मातेति मंत्रवर्णात् । महिषं महांतं इंद्रं अन्ववेनत् अन्वविंदत् । तस्य हितं

उतमातामंहिषमन्ववेनदमीत्वाजहतिपुत्रदेवाः ॥ अथाब्रवीद्वृत्रमिंद्रोहनिष्यन्स खेविष्णोवितरंविक्रमस्व ॥ ८ ॥

स्ववचनं प्रकाशितवती ॥ तदेवाह ॥ अमी इति ॥ हे पुत्र अमी देवास्त्वा त्वां जहति । गोब्राह्मणयज्ञादीनामसुरैर्भुवि भंगे कृते भागमलभमानाः देवा अरक्षितारं त्यक्ष्यंतीति भावः ॥ अत्र इंद्रो वृत्रं वारयति धर्ममिति वृत्रं असुरकुलं हनिष्यन् स्वयमशक्तः सन्निदमाह॥सखेइति ॥ हे सखे अंतर्यामितया परमाप्ततम विष्णो व्यापनशील वितरं विशेषेण सुतरां क्रमस्व अत्युत्कटं पराक्रमं कुरु । असुरान् जहीत्यर्थः ॥ ८ ॥ स एवमिंद्रे-

२

भूचरेष्वत्यंतदुष्करेषु तिष्ठंति। एतदेवाह ॥ ते इति ॥ ते सप्तगर्भाः विपश्चितो ज्ञानवंतः धीतिभिः पूर्वेषां देहानां निधानैरवस्थापनैः परिभवंति साकल्येन वर्तंते। पुनश्च ते मनसा परिभुवः मनोमात्रेण साधनेन विश्वतः देहेंद्रियादिसाकल्येन संपन्नाः संतः परिभवंति उत्पद्यंते पुनरित्यर्थः। अत्र रामाविषये मनसेत्युभयत्रान्वेति। तस्य मातृद्वयेपि मनोमात्रेण प्रवेशात्। स्वकर्मजदेहाभावादिति ध्येयम् ॥ ९ ॥ कृष्णन्नियानमिति भगवतो

यईंचुकारनसोअस्यवेदयईंददर्शहिरुगिन्नुतस्मात् ॥ समातुर्योनापरिवीतोअन्तर्बहुप्रजानिर्ऋतिमाविवेश ॥ १० ॥

भूप्रवेश उक्तःतं विशदयाति ॥ य ईमिति ॥ योयं धीधातुः ईं एनं प्रपंचं चकार कल्पिवान् सः अस्य एनं प्रपंचं न वेद न हि जडं मनः स्वकार्यं वेदितुमलं मृदिव घटम्। यश्चाहंकारः ईं एनं ददर्श यो द्रष्टृत्वाभिमानी तस्मादपि नु निश्चितं हिरुक् पृथक् इत एव य एवं विधोहंकारस्यापि साक्षी केवलदृङ्मात्रस्वरूपः स मातुर्योना। सुपां सुलुगिति सुपो डा। योनेः गर्भाशयस्य अंतर्मध्ये परिवीतोऽर्थोज्जरायुणा वेष्टितो [illegible]

णाभ्यर्थितो विष्णुर्देवक्या उदरे योगमायाद्वारा पूर्वं सप्तसंख्यान् अर्द्धगर्भान् आवेशयदित्याह ॥ सप्तार्द्धगर्भा इति ॥ कालनेमिपुत्राः षड्गर्भाख्याः ब्रह्माणमाराध्यामरत्वं प्राप्ता अपि पितामहेन हिरण्यकशिपुना पितामहं परित्यज्य देवपितामहं श्रयंतो यूयं स्वपितुर्हस्तेनैव मरणं प्राप्स्यथेति शप्ताः ते पाताले शयाना ब्रह्मवरदानात् स्थूलेन शरीरेणाविनष्टा अपि दैत्यशापाल्लिंगशरीरेणैव वासिष्ठोदाहृतलवणवद्योगमायाबलेन

सुप्तार्द्धगर्भाभुवनस्यरेतोविष्णोस्तिष्ठन्तिप्रदिशाविधर्मणि ॥ तेधीतिभिर्मनसाते विपश्चितःपरिभुवःपरिभवंतिविश्वतः ॥ ९ ॥

जन्मांतरं लेभिरे ॥ तत्र च कंसीभूतेन कालनेमिना ते निहता इति हरिवंशे उपाख्यायते । तेन षण्णामर्द्धगर्भत्वम् । रामोपि देवक्या उदरात् सप्तमगर्भ एव योगमायया निष्कास्य रोहिण्या उदरे निवेशित इति अयमप्यर्द्धगर्भ एव।एवंसप्तअर्धगर्भा भुवनस्य रेतो भुवनबीजभूतस्य विष्णोः प्रदिश्यत इति प्रदिक् तया प्रदिशा आज्ञाकारिण्या योगमायया हेतुतया विधर्मणि विपरीते धर्मे अंशेनामरत्वमंशेन जन्मादिभाक्त्वमित्येवंरूपेषु

भावेन । एकविंशतिभेत्येकविंशोयं पुरुष इति संख्यासामान्यादिध्मस्याप्यात्मरूपत्वं दर्शितम् । एतेन ओ-
षधे त्रायस्वैनं शृणोत ग्रावाणः इत्यचेतने प्रयोजनसंबंधोपि तत्तदंतःप्रविष्टचेतनाभिप्रायेण नत्वचेतनांशाभि-
प्रायेणेत्यपि सर्वत्र ज्ञेयम् ॥ ७ ॥ कुतो हेतोर्भगवान् भूमाववततारेत्यत आह ॥ उतमातेति ॥ माता आदितिः ।
पृथिवीति यावत् । द्यौः पिता पृथिवी मातेति मंत्रवर्णात् । महिषं महांतं इंद्रं अन्ववेनत् अन्वविंदत् । तस्य हितं

उतमातामहिषमन्ववेनदमीत्वाजहतिपुत्रदेवाः ॥ अथाब्रवीद्वृत्रमिंद्रोहनिष्यन्स
खेविष्णोवितरंविक्रमस्व ॥ ८ ॥

स्ववचनं प्रकाशितवती ॥ तदेवाह ॥ अमी इति ॥ हे पुत्र अमी देवास्त्वा त्वां जहति । गोब्राह्मणयज्ञादीना-
मसुरैर्भुवि भंगे कृते भागमलभमानाः देवा अरक्षितारं त्यक्ष्यंतीति भावः ॥ अत्र इंद्रो वृत्रं वारयाति धर्ममिति
वृत्रं असुरकुलं हनिष्यन् स्वयमशक्तः सन्निदमाह॥सखेइति ॥ हे सखे अंतर्यामितया परमाप्ततम विष्णो व्यापन-
शील वितरं विशेषेण सुतरां क्रमस्व अत्युत्कटं पराक्रमं कुरु । असुरान् जहीत्यर्थः ॥ ८ ॥ स एवमिंद्रे-

निरुद्धास्तेषां का गतिः इत्यत आह॥यस्मिन्वृक्ष इति॥मध्वादा अन्नमश्नंतः सुपर्णाःशोभनाः पतनाः कुर्दनपराः बालाः यस्मिन् वृक्षे निविशंति विश्वे सर्वे अधिसुवते च कृष्णमाज्ञापयन्ते च त्वमेव वत्सान्वेषणं कुरु वयमत्रा स्महे इति । तस्यैव वृक्षस्य समीपे यत् पिप्पलं स्वहस्तस्थमुपदंशफलं अग्रे संवत्सरात्पूर्वं स्वादु इतः स्वाद्वित्याहुः ततः पिप्पलं अतीतेपि वत्सरे न उन्नशत् उत्कर्षणं न नष्टम्।तत्र हेतुमाह। यइति। यः पितरं न वेद

आग्रावंभिरहुन्येभिरक्तुभिर्वरिष्ठुंवज्रमाजिघर्तिमायिनिं ॥शतंवायस्यंप्रचरन्स्वेदमैसंवुर्तयंतोविचंवर्तयन्नहा ॥ १५ ॥

यःयत् यस्मात् पितरं संवत्सरमेवोक्तजनो न जानाति॥पितृशब्दश्च संवत्सरवाची पंचपादं पितरं द्वादशाकृति मित्यत्र दृष्टः ।संवत्सरमात्रः कालो गोपानां क्षणवद्गत इत्युपबृंहणे स्पष्टम् ॥१४॥अथ गोवर्द्धनोद्धरणमाह । आग्रावभिरिति । यस्य इंद्रस्य स्वेदने स्वकीये गृहे शतं शतसंख्या वा शब्दाधिका वा संवर्तं प्रलयं कुर्वंतः सांवर्तका नाम मेघगणाः प्रचरन् शब्दानुच्चरंति स इंद्रः । ग्रावभिरिति ग्रावसमुदायरूपपर्वतो लक्ष्यते । तेन

देशे विश्वरूप्यं अपश्यत् विश्वरूपस्य भावो विश्वरूप्यं यदेव योजनत्रयांतरस्थेषु वत्सेषु रूपं तदेव कार्त्स्न्येन व्रजस्थेष्वपश्यत्।ततश्चास्य इमे सत्या उत ते इति संदेह एवासीत् । गोगोपीवद्विशेषावधारणे सामर्थ्यं नासीदिति भावः॥१२॥अन्येषां विपर्यय एवासीदित्याह॥य इति॥ये अर्वांचो वत्सादयः कृष्णसृष्टाः तान् उ निश्चितं पराञ्चः पूर्वान् ब्रह्मसृष्टानाहुः॥एवं ये परांचस्ते उ अर्वांच आहुरिति स्पष्टार्थकानेवं विपर्ययेणाहुरत आह ।इंद्र

येअर्वांचस्तांउपरांचआहुर्येपरांचस्तांउंअर्वांचआहुः ॥ इंद्रश्चयाचक्रथुःसोमता निधुरानयुक्तारजंसोवहंति ॥ १३ ॥ यस्मिन्वृक्षेमध्वादासुपर्णानिविशंतेसुवतेचा धिविश्वे ॥ यस्येदाहुःपिप्पलंस्वाद्वग्रेतन्नोन्नशद्यःपितरंनवेद ॥ १४ ॥

इति॥या यान् इंद्रः कृष्णः चात् विधाता तौ उभौ चक्रथुः निर्मितवंतौ।पुरुषव्यत्यय आर्षः।तानि तेषु ये अर्वांच इत्युक्तम्।हे सोम सोमाभिमानिन् विष्णो धुरानयुक्ता रथादिधुरि नियुक्ता गवादय इव रजसः विपरीतबुद्धिरूपं रजो वहंति नृपशवः ॥ १३॥ संतु ब्रह्मेतरेषु वत्सेषु कृष्णात्मसु प्रमासंशयविपर्ययाः;ये तु वत्सादयो वर्षमात्रं

वत्सत्वंत्वंतरात्मत्वेन सन्निहिततरत्वान्न दूरागमनेन खिद्यते नाप्यभितो गोभिः शब्दमन्विष्यते,नापि शब्दविशेषद्वारायं मदीयो वत्स इति निश्चीयते,नापि तज्ज्ञानानंतरं गोपयः प्रवर्त्तत इति।अनात्मा हि संशयगोचरो दृश्यते न त्वात्मेति अहं न वेति वा नाहं वेति वा । तयोरात्मन्यदर्शनात् । अतः प्रत्यक्परागवत्सयोर्भेदं जानानो गोगोपीगणो धातुरप्येतन्महिमज्ञानाभावात् वरीयानिति भावः॥११॥युक्तेति॥दक्षिणाया धुरि कर्मफलानामुपरिभा

युक्तामातासीद्धुरिदक्षिणाया अतिष्ठद्गर्भोवृजनीष्वंतः ॥ अमीमेद्वत्सोअनुगामपश्यद्विश्वरूप्यंत्रिषुयोजनेषु ॥ १२ ॥

गेस्थितेन।विधिनेति शेषः।माता मिनोत्यनयेति माता दिव्यदृष्टियुक्ता वत्सानां परीक्षणे नियुक्तासीत् । मायावत्सेषु वत्सपेषु किमिदानीं व्रजे वृत्तमस्तीत्यालोचितवानित्यर्थः।ततश्च किं दृष्टमत आह॥अतिष्ठदिति।वृज नीषु व्रजगतासु नीषु मातृषु गर्भः वत्सः अंतरिवांतः गर्भ इव निकटे एव अतिष्ठदित्यपश्यत् । ततो नु पश्चाद्वत्सो विष्णोः पुत्रो ब्रह्मा गां यत्र स्वयं वत्साः स्थापितास्तां भुवं अमीमेत् परीक्षितवान् ।ततास्त्रिषु योजनेषु व्यवहिते

इयं पयो वर्द्धताम् यथा कृष्णे वत्से सति क्षीरमवर्द्धयदेवमित्यर्थः । महते सौभगाय कैवल्याय अश्विभ्यां
दोहनिमित्ताभ्यां संप्रदानत्वेन दोग्धृत्वेन वा आश्विनोर्धर्मदेवतात्वादध्वर्युत्वेन संस्तुतत्वाद्वा।अत्र सेयमिति पदा
भ्यां अभ्यगादिति पदाभ्यां च पूर्ववृत्तांतसूचकाभ्यांवसूनांवसुपत्नीतिशब्दाभ्यां च श्रीभागवतोपबृंहिता वत्स
हरणकथा सूचिता॥१०॥गोरिति॥सैव गौः अनुवत्सं ब्रह्मणा हृतं स्ववत्समनु पश्चाज्जातं वत्सं श्रीकृष्णं अमी-

गौरमीमेदनुवत्संमिषंतंमूर्द्धानंहिङ्ङकृणोन्मातवाउ ॥ सृक्वाणंघर्ममभिवावशाना
मिमातिमायुंपयतेपयोभिः ॥ ११ ॥

मेत् प्रमीतवती।कीदृशम्।मिषं व्याजं कुर्वाणं कपटवत्समित्यर्थः।कथममीमेदत आह।मातेति।यतः मातवै मातुं
वत्सं परीक्षितुं नु निश्चितं मूर्द्धानं हिङ्ङकृणोत् हिंकारेणाघ्रातवती मनसा ज्ञातत्वेपि आघ्राणेनापि तं ज्ञातवती।क
थमेतदत आह।सृक्केति। सृक्वाणं घर्मं सरतीति सृक्वाणं अभिसरं घर्मवंतं शीघ्रागमनश्रमेण स्वेदवंतं अभिवावशाना
सर्वतः शब्दं कुर्वाणा वत्सस्य च मायुं शब्दं परिचिनोति।ततश्च पयोभिरूधस्थैः पयते प्रस्नौति प्रस्यंदते।भगवद्रूपे

प्रकाशितवान् अवेद्रिन्द्रजल्गुल इति मुनेर्वाक्यं स्मरन् । तच्च दृष्ट्वा माता प्राह ॥ क उ नुत इति ॥ हे परमेश्वर ते तव महिमनः माहात्म्यस्य समस्य कृत्स्नस्य अन्तके उ नु के निश्चिततया ये अस्मत्तःपूर्वं ऋषयोपि आपुस्ते केन केपीत्यर्थः।अत्रहेतुमाह।यदि यत् यतः मातरं मां भूमिं पितरं दिवं च साकं सहेदं युगपत् कृत्स्नं जगादित्यर्थः। स्वायास्तन्वः सकाशात् अजनयथाः प्रादुर्भावितवानसि । अतस्तव माहात्म्यं दुरधिगममित्यर्थः ॥ ३० ॥

॥ इति श्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसगोविंदसूरिसूनोः श्रीनीलकंठस्य कृतौ स्वोद्धृतमंत्रभागवतव्याख्यायां मंत्ररहस्यप्रकाशिकायां गोकुलकाण्डः प्रथमः ॥१॥ अथ वृंदावनं प्रति वृकभयाद्भगवतः प्रस्थानमन्यसंवादमुखेनाह ॥

**सुदेवोअद्यप्रपतेदनावृत्परावतंपरमाङ्गन्तवाउ ॥ अधाशयीतनिर्ऋतेरुपस्थेधैनं वृकारभसासोअद्युः ॥ १ ॥**

सुदेव इति ॥ सुदेवः आद्यवर्णलोपाद्वासुदेवः । यथोक्तं बृहद्देवतायां—वर्णस्य वर्णयोर्लोपो बह्वचां व्यंजनस्य वा । अत्राणीति कपिनाभादनोयामीत्याद्यासु चेति । अत्राण्यस्मै पङ्क्तिः संभरंति वर्णस्य लोपः । अमत्राणीत्यपेक्षिते । प्रिया तष्टानि मे कपिरित्यत्र वर्णयोर्लोपः । वृषाकपिरि

इयं पयो वर्द्धताम् यथा कृष्णे वत्से सति क्षीरमवर्द्धयदेवमित्यर्थः । महते सौभगाय कैवल्याय अश्विभ्यां दोहनिमित्ताभ्यां संप्रदानत्वेन दोग्धृत्वेन वा आश्विनोर्धर्मदेवतात्वादध्वर्युत्वेन संस्तुतत्वाद्वा।अत्र सेयमिति पदाभ्यां अभ्यगादिति पदाभ्यां च पूर्ववृत्तांतसूचकाभ्यांवसूनांवसुपत्नीतिशब्दाभ्यां च श्रीभागवतोपबृंहिता वत्सहरणकथा सूचिता॥१०॥गोरिति॥सैव गौः अनुवत्सं ब्रह्मणा हृतं स्ववत्समनु पश्चाज्जातं वत्सं श्रीकृष्णं अमी-

गौरमीमेदनुवत्संमिषंतंमूर्द्धानंहिङ्ङ्कृणोन्मातवाउ ॥ सृक्काणंघर्ममभिवावशाना मिमातिमायुंपयतेपयोभिः ॥ ११ ॥

मेत् प्रमीतवती।कीदृशम्।मिषं व्याजं कुर्वाणं कपटवत्समित्यर्थः।कथममीमेदत आह।मातेति।यतः मानवै मातुं वत्सं परीक्षितुं नु निश्चितं मूर्द्धानं हिङ्ङ्कृणोत् हिंकारेणाघ्रातवती मनसा ज्ञातत्वेपि आघ्राणेनापि तं ज्ञातवती।कथमेतदत आह।सृक्केति। सृक्काणं घर्मं सरतीति सृक्काणं अभिसरं घर्मवंतं शीघ्रागमनश्रमेण स्वेदवंतं अभिवावशाना सर्वतः शब्दं कुर्वाणा वत्सस्य च मायुं शब्दं परिचिनोति।ततश्च,पयोभिरूधस्थैः पयते प्रस्नौति प्रस्यंदते।भगवद्रूपे

सर्पत्वादेव ईदृशोपि इन्द्रं कृष्णं प्राप्य अपृतन्यत् अयुध्यत् तेन सह युद्धं कृतवान् । अस्य कालियस्य सानौ मूर्द्धनि वज्रं आजघान भगवत्पदचिह्नभूतं शिरस्याजगाम तदंकितं शिरोभूदित्यर्थः । सोयं वध्रि श्रमपट्टिका । तत्सदृशोनिस्तेजाः कालियो वृष्णो हरेः प्रतिमानं प्रतिचिह्नं वज्ररेखारूपं बुभूषन् भूषामिवात्मनः कुर्वन् अशयत् शयनं चकार निरुद्यमोभूत् । कीदृशः । पुरुत्रा व्यस्तः अनेकैः प्रकारैः निरस्तः ॥४॥

नदन्नभिन्नमंमुयाशयांनुंमनोरुहांणाअतियंत्यापंः ॥ याश्चिद्वृत्रोमहिनापर्यतिष्ठत्ता-
सामहिःपत्सुतःशीर्बभूव ॥ ५ ॥

नदन्नेति ॥ नदन् न शोणादिकं नदमिव शयानं दीर्घाकारेणापतितममुयानेन कृष्णेन भिन्नं निर्जितं अनु पश्चात् आपः यमुनाजलानि अतियंति अत्युत्कर्षेण गच्छंति । कीदृश्यः । मनोरुहाणाः हृदयंगमा इत्यर्थः । याः अपः चित्पूर्वं वृत्रः कालियः महिना माहात्म्येन पर्यतिष्ठत् तासामेव सन्निधौ शयनार्थं वा अहिः कालियः पत्सुतः पद्भ्यां पीडितः सन् शेते इति पत्सुतःशी । समासेपि विभक्त्यलोप आर्षः । एवं विधा

प्रकाशितवान् अवेद्विन्द्रजल्गुल इति मुनेर्वाक्यं स्मरन् । तच्च दृष्ट्वा माता प्राह ॥ क उनुत इति ॥ हे परमेश्वर ते तव महिमनः माहात्म्यस्य समस्य कृत्स्नस्य अन्तके उ नु के निश्चिततया ये अस्मत्तः पूर्वे ऋषयोपि आपुस्ते केन केपीत्यर्थः ।अत्रहेतुमाह।यदि यत् यतः मातरं मां भूमिं पितरं दिवं च साकं सहेदं युगपत् कृत्स्नं जगदित्यर्थः। स्वायास्तन्वः सकाशात् अजनयथाः प्रादुर्भावितवानसि । अतस्तव माहात्म्यं दुरधिगममित्यर्थः ॥ ३० ॥
॥ इति श्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसगोविंदसूरिसूनोः श्रीनीलकंठस्य कृतौ स्वोद्धृत-

सुदेवो अ॒ह्यप्र॒पते॒दनां॒वृत्परा॒वतं॒परमा॒ङ्गत्त॒वाउं ॥ अधा॒शयी॒तनिर्ऋ॑ते॒रुप॒स्थे॒धैनं॑ वृका॒रभु॒सा॒सोअ॒द्युः ॥ १ ॥

मंत्रभागवतव्याख्यायां मंत्ररहस्यप्रकाशिकायां गोकुलकाण्डः प्रथमः ॥१॥ अथ वृंदावनं प्रति वृकभयाद्भगवतः प्रस्थानमन्यसंवादमुखेनाह ॥ सुदेव इति ॥ सुदेवः आद्यवर्णलोपाद्वासुदेवः । यथोक्तं बृहद्देवतायां—वर्णस्य वर्णयोर्लोपो बह्वचां व्यंजनस्य वा । अत्राणीति कपिनाभादनोयामीत्याद्यासु चेति । अत्राण्यस्मै पङ्क्तिः संभरंति वर्णस्य लोपः । अमत्राणीत्यपेक्षिते । प्रिया तष्टानि मे कपिरित्यत्र वर्णयोर्लोपः । वृषाकपिरि

ददातीत्यर्थः॥२१॥ततो निर्भय.ः गावः आसन्नित्याह।नतानशंतीति।ताः गावो न नशंति तस्करश्च ताः गाः।न दभाति नाभिभवति आमित्रः अमित्र प्रभवो व्यथिः पीडा आसाम् एताः गा न आदधर्षति न भीषयति याभिः यत्प्रस्नवपयआदिभिः देवान् यजते तथा ददाति च दक्षिणात्वेन ताभिः गोभिः ज्योक् निरंतरं गोपतिः सर्वोपि

नतानंशंतिनदंभातितस्करोनासांमामित्रोव्यथिरादंधर्षति॥देवांश्चयाभिर्यजंतेददा
तिचुज्योगित्ताभिःसचतेगोपतिःसुह॥२२॥नताअर्वारेणुकंकाटोअश्नुतेनसंस्कृत
त्रमुपयंतिताअभि॥उरुगायमभयंतस्यताअनुगावोमर्त्यस्यविचरंतियज्वनः॥२३॥

गोमान् सन् इत्त संगतो भवत्येव ॥ २२ ॥ न ता अर्वंति । ताः गाः अर्वा हयरूपी केशी नाम असुरः रेणुककाटः रेणुना ककाटयति अतिशयेन आवृणोति नभोगर्भं इति रेणुककाटः । न अश्नुते व्याप्नोति वशीकर्तुं न शक्नोतीत्यर्थः।तस्य गोयूथे प्रविष्टमात्रस्यकृष्णेन नाशितत्वात्।तथा ताः गावः संस्कृतत्रं संस्कृतेनैव हवि-

रादिना तृप्तः सन् त्रायत इति संस्कृतम् अष्टाचत्वारिंशत्संस्कारवंतं त्रायत वा इति संस्कृतत्रोऽग्निः तंप्रति ताअभ्युपयंति न च वाडवाग्नौ पततीत्यर्थः । कृष्णेनैव वाडवस्यापि पीतत्वात्।एतच्चारोगादेरप्युपलक्षणम् । निर्भयत्वे हेतुमाह । उर्वीति।उरुगायं महाकीर्तिम् अभयं भयहीनमनुलक्ष्य तस्य मर्त्यस्य यज्वनो नंदादेर्गावो विचरंति ॥ २३ ॥ पूर्वमंत्रोपन्यस्तस्यार्वणो वधोन्यत्रापि श्रूयते । हस्त इति । हस्ते भुजे विश्वानि सर्वाणि

हस्ते॒दधा॑नो नृ॒म्णा विश्वा॒न्यमे॑ दे॒वान्धा॒द्गुहा॑ नि॒षीद॑न् ॥ वि॒दंती॒मत्र॒ नरो॑ धियं॒धा हृ॒दा यत्त॒ष्टान्मंत्रा॒न॒शंस॑न् ॥ २४ ॥

नृम्णा बलानि दधानो हस्तेनैव गुहा अश्वस्य मुखगुहायां निषीदन् प्रविश्य स्थिरीभवन् ततो मुखस्थे हस्ते विवृद्धिंगते कर्कटीफलवद्विदीर्णे च केशिनि देवान् अमे सुखे धात् अदधत् । एतच्च भागवते द्रष्टव्यम् । विदंतीति । यम् एनं सुखयितारम् अत्र भक्तौ विदंति लभंते नरो मनुष्याः ये धियंधाः बुद्धिं धारयंतः निगृह्णंतो योगिनः यदनुग्रहात् हृदा मनसैव तष्टान् परिच्छिन्नान् मंत्रान् अशंसन् हिरण्यगर्भाद्याः शिष्येभ्यः अकथयन्।

यथोक्तं तेने ब्रह्म हृदा य आदिकवये इति ॥ २४ ॥ पूर्वमंत्रे सूचितः अग्निभयाभावहेतुः । तं प्रकटन् कृष्ण-कृतमग्निपानं प्रदेशान्तरस्थेन मंत्रेणाह । सजिह्वयेति । समायीयस्योपरि इंद्रेण सांवर्तको मेघगणः प्रेरितः स दावाग्निरूपिणोसुरस्य विनाशे चतुरनीकोपि चत्वारि पृथिव्यप्तेजोवाय्वात्मकानि अनीकानि सैन्यानीव प्रतिपक्षक्षयकारणानि संत्यस्य चतुरनीकः । तथा हि। बहुभिः पांसुभिरद्भिर्वा तीव्रवायुना वा दिव्यार्चिमदग्निः

सजिह्वयाचतुंरनीकऋञ्जतेचारुवसानोवरुणोयतंन्नरिम् ॥ नतस्यंविद्मपुरुषत्वतावयं यतोभगःसवितादातिवार्यम् ॥ २५ ॥

शाम्यतीति प्रसिद्धम् । आसुरोग्निर्दैवेनाग्निना शमयितुं युक्तः माहेश्वरोज्वर इव वैष्णवेन ज्वरेण । अथापि भक्तेष्वत्यंतवात्सल्यात् स्वस्य जिह्वयैव अरिम् आसुरमग्निम् ऋजते हिनस्ति । कीदृशः । चारुवसानः रम्यं मनुष्यशरीरं दधान इत्यर्थः । भक्तान् गोपादीन् स्वीयत्वेन वृण्वानः यतन् यतमानः तस्य एवंविधस्य पुरु-पत्वता पौरुषाणि। द्वितीयो भावप्रत्ययः छान्दसः। वयं न विद्म न जानीमः। यतो मानुषेष्वदृष्टमपि दावाग्निपानं

करोति । यतो यदनुग्रहात् भगो भाग्यवान् सविता सूर्यो वार्यं वारि । स्वार्थे ष्यञ् । दाति ददाति ॥ यद्वा
। कृष्णं त इमेत्यस्यानंतरं मंत्र उदाहार्य्यः॥२८॥ सद्योजातस्येति । सद्योजातस्य शिशोरेव कृष्णस्य ओजः
सामर्थ्यं ददृशानं ददृशेऽदृष्टपूर्वमित्यर्थः । यच्छोचिः ज्वालाजालम् अतसेषु शुष्कतृणेषु वातोनुवाति संवर्द्ध-
यति। ततः अस्य शिशोस्तिग्मां जिह्वाम्।अनु इत्यनुकृष्यते । तेन तां प्राप्येत्यर्थः रिणक्ति रिच्यते।नश्यती-

सद्योजातस्यददृशानमोजोयदस्यवातोअनुवातिशोचिः ॥ रिणक्तितिग्मामतसेषु
जिह्वांस्थिराचिदन्नादयतेविजंभैः ॥२६॥उपेदमुपपर्चनमासुगोषूपपृच्यताम् ॥ उप
ऋषभस्यरेतस्युपेंद्रतववीर्ये ॥ २७ ॥

त्यर्थः । स्थिराचिदन्ना यथा स्थिरं पायसाद्यन्नं तद्वदित्यर्थः।तत्र हेतुमाह।दयते विजंभैरिति । एवमसद्योजातो
जंभैरसुरैर्हेतुभिर्विशेषेण दयते तैः पीडितलोकं पालयति । अतो महान्कारुणिकोऽयमेव शरणीकरणीय इति
भावः ॥ २६ ॥ उपेदमिति । हे उपेंद्र तव वीर्यं जाग्रत्यपि सति आसु गोषु इदम् उपपर्चनं निहितस्य गर्भ-

स्य विनाशार्थं पुनः ऋषभासुरेण क्रियामाणं रेतःसेचनम् उपपृच्यता उपेत्य कथं समृष्टं जायताम् उपशब्दो पादपूरणार्थौ । ऋषभस्य रेतासि निमित्तभूते सति ॥ २७ ॥ इत्थं गोवचःश्रुत्वा कृष्णेन कृतो वृषभवधः प्रदेशांतरे श्रूयते । प्रनेमस्मिन्निति । योंतर्गोपाः अंतर्यामिन् नेस्मिन् अर्द्धे प्रपंचे स्थावरः सोमो नाम तत्पोषकः प्रददृशे प्रकर्षेण दृष्टो वेदे सोम औषधीनामधिपतिरित्यादौ।यश्च नेमम् अर्द्धं प्रपंचम् अस्था जंगमत्वेन आविः

**प्रनेमंस्मिन्ददृशेसोमोंअंतर्गोपानेमंमाविरस्थाकृणोति ॥सतिग्मशृंगंवृषभंयुयुत्सन्द्रुहस्तंस्थौबहुलेबद्धोअंतः ॥ २८ ॥**

कृणोति विस्पष्टयति सोंतर्गोपास्तिग्मशृंगं वृषभं वृषभासुरं युयुत्सन् योद्धुमिच्छन् द्रुहो द्रुह्यन् तस्थौ युद्धेन हत्वा स्थितोभूदित्यर्थः । कीदृशोसौ । बहुले महति जने संसारे अंतःहृदयपुंडरीकरूपे उपाधौ बद्धो मायया रुद्धोस्ति । योऽयमंतर्यामी जगद्धेतुः स एव जीवभावं प्राप्तान् स्वप्रतिबिंबान् स्थावरजंगमान् पाती-

दासस्य विघ्नकर्तुरिंद्रादेश्च ओजः सामर्थ्यं दंभय नाशय । वयम् ऋषयः तत्प्रसिद्धम् अस्य बुद्धिस्थस्य अनेन कश्यपेन पित्रा संभृतं संचितं पारिजाताख्यं वसु धनम् इंद्रेण सार्द्धं तव विभजेमहि विभागं करिष्यामः। ऐरावतादीनामुपभोगमिंद्रादयः कुर्वंतु पारिजातं तु त्वदीयमत्र दापयिष्यामः । एतेन पारिजातहरणं शक्रमदभङ्गश्च प्रोक्तः । नभंतामिति । प्राग्वत् ॥ ६ ॥ तदेवं सन्निहितानां मनोरथपूरणं कृतम् । देशांतरस्था-नामपि तत्कृतमिति द्रौपद्याह । वासयसीवेति । हे वेधसः इदं ब्रह्मणोपि परमेश्वर त्वं नः अस्मान्कौरवसभायां

**वासयंसीववेधसस्त्वन्नःकदानइंद्रवचसोबुबोधः॥ अस्तंतात्याधियारयिंसुवीरंपृक्षोनोअर्वान्युहीतवाजी ॥ ७ ॥**

दुःशासनेनोपस्पृष्टवस्त्रान् । बहुत्वं पूजायाम् । वस्त्रान्तरैर्वासयसीव आच्छादयसीव । ऊर्ध्वोर्ध्ववस्त्रापगमोत्तरम-न्तराच्छादितमेव आत्मानं पश्यामि न त्वनाच्छाद्यमानम् । तेन वासयसीवेत्यनुमीयस इत्यर्थः । नः अस्माकं वचसः प्रार्थनावाक्यं दूरदेशस्थश्च कदा बुबोध बुद्धवानसि । त्राहीति वाक्योच्चारणात्प्रागेव त्राणं कृतवानसी-त्यर्थः।किं च अस्तं गृहं रयिं राज्यादिकं धनं सुवीरं परिक्षिदाख्यं पुत्रं च तात्या तत्पालनेन धिया बुद्धि-

साचिव्येन च पृक्षः पृतनाः क्षिणोतीति शत्रुसैन्यहंता अर्वा नित्यसन्निहितः वाजी वेगवान् नः अस्मान् न्युहीत अवसत् प्रापितवान्।जयद्रथवधादौ हि प्रतिज्ञाभंगादर्जुननाशे पांडवानां गृहमेव उच्छिन्नं स्यात्।अतो गृहस्य संरक्षणं त्वयैव कृतम्।एवमन्यदपि ज्ञेयम् ॥७॥ अग्निप्रसादात् स्वयं स्वोत्पत्त्यनुपाधिकमेव भगवंतं स्तौति द्रौपद्येव। मा नो अग्न इति। हे अग्ने नः अस्मान् वीरात् विक्रांतात्ते अर्जुनादन्यस्मै स्वयंवरकाले मा परादाः न पराकृत्य दत्तवानसि।तथा दुर्वाससे ऋषये वने दुर्योधनवचनादकालेऽभ्यागताय।षष्ठ्यर्थे चतु-

मानोअग्नेवीरतेपरादादुर्वाससेमतयेमानोअस्यै ॥ मानःक्षुधेमारक्षसऋतावोमानो दमेमावनआजुहूर्थाः ॥ ८ ॥

र्थी।तस्य अमतये विरोधिबुद्धये यद्यकालेपि गतं मां शिष्यैः सहितं न भोजयिष्यंति तर्हि सर्वान् पांडवान् शापेन भस्मीकरिष्यामीत्येवंरूपाय अस्यै बुद्धिस्थायै नः मा दाः। मा नः क्षुधे। वने सूर्यप्रसादात् क्षुधे स्वाद्याय नः मा दाः।मा रक्षसे। भीमार्जुनयोः परोक्षे धर्मराजं मां च हृतवते ब्राह्मणरूपाय रक्षसे नोऽस्मान् मा दाः। हे ऋतावः ऋतेन सत्येन वातीति ऋतवः तस्य संबोधनं हे ऋतवः।दैर्घ्यं सांहितिकम्।हे सत्यपक्षपातिन्

दमे गृहे कौरवसभायां नोऽस्मान् आजुहूथाः दुःशासनादिद्वारा मा न आजुहूथाः । न प्रसह्य हृतवानसि। तत्र
तत्र बाधितुमागतेषु शत्रुषु रक्षितवानसीत्यर्थः ॥ ८ ॥ अथ हरिवंशे उपबृंहितां भगवतः समुद्रे सलिलक्रीडा-
मनुवर्णयति मंत्रः । उत्समुद्रादिति।क्षीरोदादपि मधुना मधुमान् अमृतयः ऊर्मिः उदागात् उद्गतः।स च साम्रा-
ज्याय सम्राट् सर्वराजाधिराजः हरिः तस्येदं लीलाकर्म साम्राज्यं तस्मै कृष्णस्य क्रीडार्थं तरं प्रकर्षेण

उत्समुद्रान्मधुंनाऊर्मिरागात्साम्राज्यायप्रतरंदधांनः । अमीचुयेमघवानोवयंचे
षमूर्जंमधुमुत्संभरेम ॥ ९ ॥ ससमुद्रोअपीच्यंस्तुरोद्यामिवरोहतिनियदासुयर्जु
र्दधे॥ समायाअचिंनापदास्तृणान्नाकमारुहन्नभंतामन्यकेसमे ॥ १० ॥

दधानः।स एव समुद्रस्तमूर्मिं विपुलतरं कृत्वा धत्त इत्यर्थः।अमी च पुरोवर्तिनो मघवानः इंद्रतुल्याः ये वा सं-
ति वयं च मानुषाः सर्वे सहैव इषं अन्नम् ऊर्जं रसं च मधुमत् अमृतस्वादुमत् संभरेम विहारे स्वीकुर्मः ।
स्वार्थमीश्वरार्थं चेति भावः॥९॥ एवं समुद्रे क्रीडता भगवता स्वलोकं प्रत्यपि गतमित्याह ।स समुद्र इति ।
यो विष्णुना क्रीडापुष्करिणीकृतः स प्रसिद्धः समुद्रः अपीच्यो रम्यतमः तुरो वेगवान् द्यां रोहतीव स्वर्गा-

द्वितीया प्रथमार्थे । राजाधिपतिः नराणां मध्ये यशस्करो बभूव । यद्वा बलवान् यशस्करः प्रभुत्ववांश्च स राजाधिपतिः बभूवेत्यर्थः । स एव संकीर्णनागाश्वपतिः सन् नराणां सततं सुमंगल्यं दीर्घमायुश्च दत्तवान् ॥ ३॥ यो धर्तेति।यो विष्णुः भुवनानां भूरादीनां धर्ता यश्च उस्राणां गवाम् अपीच्य२ अपीच्यानि रम्याणि तत्तद्गुणविशेषीकृतानि नामानि वेद जानीते गुह्या गुह्यानि । यथोक्तं भारते—"ऋषभानपि जानामि

यो॒ध॒र्ता भुव॑नानां॒य उ॒स्राणा॑मपी॒च्या॒ ३ वेद॒नामा॑नि॒गुह्या॑ ॥ सक॒विः काव्या॑पु॒रुरू॒पं द्यौरि॑वपुष्यति॒नभं॑तामन्य॒केस॑मे॥४॥ यआ॒स्वत्कं आ॒शये॒विश्वा॒जाता॑न्ये॒षाम्॥ परि॒ धामा॑नि॒मर्मृ॑श॒द्वरु॑णस्य॒पुरो॒गये॒विश्वे॑दे॒वा अनु॑व्र॒तंनभं॑तामन्य॒केस॑मे॥ ५ ॥

सम्यक् पूजितलक्षणान् । येषां मूत्रमुपाघ्राय अपि वंध्या प्रसूयते" इत्येवं गवामपि गोप्यानि संतीत्यूह्यम् । स कविः सर्वज्ञः काव्या काव्यं कवीनां स्तुत्यं पुरु बहुविधं रूपं पुष्यति आदाय पुष्टं च करोति । तत्र दृष्टांतः—द्यौरिवेति । यथा द्युस्थाः देवाः प्रतियजमानं रूपभेदान्कृत्वा युगपदनेकान्यज्ञान् गच्छंति तद्वदित्यर्थः । नभंतामिति । प्राग्वत्॥४॥ "यस्मान्विश्वानि काव्य" इति मंत्रः प्राग्व्याख्यातः । तदनंतरं मंत्रं व्या-

मंत्रस्य माहात्म्यम् "आस्यजानंतोनामचिद्विवक्तनम्" इत्यंतैर्मंत्रैः कथ्यत इति मुक्तिकामैरयमुपास्यः॥३०॥
इति श्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरवंशावतंसगोविंदसूरिसूनोर्नीलकंठस्य कृतौ स्वोद्धृतमंत्रभागवतव्याख्यायां मंत्ररहस्यप्रकाशिकायामक्रूरकाण्डस्तृतीयः ॥ ३ ॥ अथ मथुराप्रविष्टयोः रामकृष्णयोः रजकमालाकारादिषु निग्रहानुग्रहादिकमाह । युवमिति । भो मित्रावरुणौ पूर्वपश्चिमौ अंतर्यामिसूत्रात्मानौ। "यो देवानां नामधा एक एव" इति सर्वदेवतनामभिस्तयोरभिधेयत्वस्य प्रागेव दर्शितत्वात्।

युवंवस्त्राणिपीवसावंसाथेयुवोरच्छिद्रामंतवोहसर्गाः ॥ अवातिरतमनृतानिविश्वऋतेनमित्रावरुणासचेथे ॥१॥

युवं वस्त्राणि परकीया[illegible]नि पीवसा व[illegible] वसाथे स्वां तनुं छादयेथाम्। कंसस्य रजकं हत्वा तदी यानि वासांसि बलाद्गृहीतवंताविति प्रसिद्धम्। यथा युवोः युवयोः मंतवः मानयितारः सर्गाः सृजंति दिव्यांगानुलेपनादीनीति सर्गाः मालाकारकुब्जादयः अच्छिद्राः पूर्णाः जाता इति शेषः। आत्मलाभादेव पूर्णत्वं भवति नान्यथेति ते कृतकृत्या जाता इत्यर्थः । तथा विश्वा ऋकार उदये कंथावकारामिति, संहितायां ह्रस्वत्वं विश्वऋतेनेति । सर्वाणि अनृतानि आत्मनि गोपत्वं द्रुमिलपुत्रे कंसे च यादवत्वं मल्लमतं-

गजादिषु भयंकरत्वमित्येतानि अवातिरतं तीर्णवंतौ । तथा ऋतेन स्वीयेन सत्येन यादवत्वेन सचेथे संगतवं-
तौ । गोपच्छद्म विहायेतरांश्चानृतप्रधानान्निहतवंतावित्यर्थः ॥ १॥ तत्र कंसवधप्रकारमाह । इन्द्र इति।इन्द्रः
विश्वैः कृत्स्नैः वीर्यैः बलैः पत्यमानः पतन्।अर्थात् मंचादधः पातितस्य कंसस्योपरि पततीति पुराणाल्लभ्यते।
माहित्वा महत्त्वेन उभे रोदसी द्यावापृथिव्यौ आपप्रौ पूरितवान्। त्रैलोक्यस्य स्वांतर्गतस्य भारं क्षिप्तवानि

इंद्रोविश्वैर्वीर्यैः ३ पत्यमानउभेआपप्रौरोदसीमहित्वा ॥ पुरंदरोवृत्रहाधृष्णुषेणः
संगृभ्यानआभराभूरिपश्वः ॥२॥ यशस्करंबलवंतंप्रभुत्वंतमेवराजाधिपतिर्बभूव ॥
संकीर्णनागाश्वपतिर्नराणांसुमंगल्यंसततंदीर्घमायुः ॥ ३ ॥

त्यर्थः । अत एव पुरं शरीरं दारयतीति पुरंदरः शत्रुशरीरविदारकः । एवं च वृत्रहा धर्मपिधातुः कंसस्य
हंता।धृष्णुर्विश्वपालनक्षमा सेना समूहो यस्य स धृष्णुषेणः।एवंभूतः इंद्रः परमेश्वरः त्वं महाविष्णो भूरिपश्वः
बहून्पशुप्रायान् असुरान् संगृभ्या संगृह्येत्यर्थः । नः अस्मान् आभर साकल्येन पालय॥२॥“ऋषभंमासमा
नाम्” इति मंत्रे प्रागुदाहृतं राजराज्यप्रार्थनं तदधुना शक्रादयः कृष्णाय संपादयंतीत्याह । यशस्करमिति ।

द्वितीया प्रथमार्थे । राजाधिपतिः नराणां मध्ये यशस्करो बभूव । यद्वा बलवान् यशस्करः प्रभुत्ववांश्च स राजाधिपतिः बभूवेत्यर्थः । स एव संकीर्णनागाश्वपतिः सन् नराणां सततं सुमंगल्यं दीर्घमायुश्च दत्तवान् ॥ ३॥ यो धर्तेति।यो विष्णुः भुवनानां भूरादीनां धर्ता यश्च उस्राणां गवाम् अपीच्य३ अपीच्यानि रम्याणि तत्तद्गुणविशेषीकृतानि नामानि वेद जानीते गुह्या गुह्यानि । यथोक्तं भारते—"ऋषभानपि जानामि

योधुर्ताभुवनानांयउस्राणांमपीच्या३वेदनामानिगुह्या ॥ सकविःकाव्यांपुरुरूपं द्यौरिवपुष्यतिनभंतामन्यकेसमे॥४॥ यआस्वत्कंआशयेविश्वांजातान्येषाम्॥ परि धामानिमर्मृशद्वरुणस्यपुरोगयेविश्वेदेवाअनुंव्रतंनभंतामन्यकेसमे॥ ५ ॥

सम्यक् पूजितलक्षणान् । येषां मूत्रमुपाघ्राय अपि वंध्या प्रसूयते" इत्येवं गवामपि गोप्यानि संतीत्यूह्यम् । स कविः सर्वज्ञः काव्या,काव्यं कवीनां स्तुत्यं पुरु बहुविधं रूपं पुष्यति आदाय पुष्टं च करोति । तत्र दृष्टांतः—द्यौरिवेति । यथा द्युस्थाः देवाः प्रतियजमानं रूपभेदान्कृत्वा युगपदनेकान्यज्ञान् गच्छंति तद्वदित्यर्थः । नभंतामिति । प्राग्वत्॥४॥ "यस्मान्विश्वानि काव्य" इति मंत्रः प्राग्व्याख्यातः । तदनंतरं मंत्रं व्या-

संग्रामे जयलब्धानि धनानि विंदमानो लभमानः शृण्वे श्रुत इति महत् महान्तमीश्वरेऽभिन्नेपि भेदं कल्पयतां दे-
वानामित्यादि पूर्ववत्॥२४॥इमामिति।इमां पृथिवीं विश्वं धायतेस्यामिति विश्वधायास्तम् । द्वितीयार्थे प्रथमा ।
बहुभाराक्रांतां च नोस्माकं धारयित्रीम् उपक्षेति उपेत्य पालयति।हितमित्रः न हितमित्रमिव राजा रंजकः हितः
श्रेयोर्थी पुण्यप्रवर्तनेन मित्रं दुःखात् त्राणकृत्।भारापहरणेनेति विवेकः।यद्यपि खलनिग्रहप्रयोजनेनापि सुकृतं

इमांचनः पृथिवींविश्वधायाउपक्षेतिहितमित्रोनराजा ॥ पुरःसदःशर्मसदोनवीराम्
हद्देवानांमसुरत्वमेकम् ॥ २५ ॥ निष्षिध्वरीस्तओषधीरुतापोरयिंतइंद्र पृथिवीबि
भर्ति ॥ सखायस्तेवामभाजःस्याममहद्देवानांमसुरत्वमेकम् ॥ २६ ॥

भवत्येव। तथापि शर्मसदः कुशलार्थं सीदंतः समासनाः परमकल्याणकारिणो ब्रह्मलोके पुरःसदः ब्रह्मसमी-
पस्थायिनः न तु वीराः मृता अपि । किमुत जीवंत इत्यर्थः। तेनास्मत्त्राणजं फलमुपेक्ष्य स्वकार्ये शत्रुनिग्रहे
कृष्णं योजयतां देवानामित्यादि पूर्ववत् ॥२५॥ निष्षिध्वरीरिति । निश्चयेन गत्वरीः । पिधुगतावित्यस्मात्
करप् । ओषधीरोषधयश्च ते तवैव उत आपः आपोपि तवैव तथा रयिं धनं च ते तवैव स्वभूतं हे इंद्र पृथिवी

बिभर्ति यत्किंचित्पृथिवी धारयति तत्सर्वं त्वदीयमेव । अतस्त्वं वसूनि जयसीत्यतदयुक्तम् । अथापि यत्किंचिद्व्याजेन अस्मांस्त्यजासि यदि तर्हि यत्त्वां प्रार्थयामस्तदस्मभ्यं देहीत्याशयेनाहुः।सखाय इति।ते तव सिद्धेश्वरस्योपासनादैश्वर्यं प्राप्ताः वयं सखायः।"तं यथायथोपासते तथैतः प्रेत्य भवंति" इति श्रुतेः । त्वत्सारूप्यप्राप्त्या निरस्तस्त्रीभावाः अत एव सखायः तव मित्राणि संतः वामम् उपासनाफलमैश्वर्यं भजंति ते वामभाजः स्याम भवेम । भोगमात्रसाम्यलिंगाच्चेति शास्त्रांतन्यायेन वयमपि त्वद्वत् सत्यसंकल्पाद्यैश्वर्यमनुभवेम।तत्र च

**सप्तमैसप्तशाकिनएकमेकाशतादंदुः ॥ यमुनायामधिश्रुतमुद्राधोगव्यंमृजेनिराधोअश्व्यंमृजे ॥ २७ ॥**

देवानामसुरत्वमेकं महद्विघ्नकरमस्ति तन्निवारणेनास्मांस्त्राहीति भावः । एवं च कैवल्यापेक्षया शेषार्जुनादिकृता सख्यात्मिका भक्तिरेव श्रेयसीति दर्शितम् ॥ २६ ॥ अथ रामकृष्णावादाय मथुरां गच्छताक्रूरेण स्नानकाले यमुनायां जातं भगवद्दर्शनमात्मनः कीर्त्यते । सप्तमे इति । सप्तसप्तसंख्याः एकोनपंचाशन्मरुतः प्राणायामदेवताः अवमर्षणकाले प्रसन्नाः संतः एकमेका एकमेकम्।सुपो डादेशः।प्रत्येकमित्यर्थः।शता शतानि

ऐश्वर्याणि। शतमैश्वर्यं भवतीति यास्कः। मेदद्दुः दत्तवंतः। यतः अधिश्रुतं सर्वापेक्षया उपरिश्रुतं वेदादाकलितं राधो वित्तम्। "एषास्य परमा संपद्" इत्युपनिपत्प्रसिद्धं भूमसंज्ञं ब्रह्मलोके च रामकृष्णवेषं यमुनायाम् अघमर्षणकाले मृजे मृगये। पश्यामीत्यर्थः। तदेव राधः उत् ऊर्ध्वम् आकाशे गव्यं गोषु सूर्यरश्मिषु स्थितम्। सूर्यमंडलेपीत्यर्थः। तत्रापि सूर्योपस्थानकाले मृजे। तदेव च राधः अश्व्यम् अश्ववाह्ये रथे स्थितं नि निहिते भूस्थानेपि मृजे। अत्र दर्शनं पुराणेपु नोक्तम्। एकस्य राधसो दर्शनेन सर्वकर्मफलावाप्तिश्च सूचिता॥२७॥

विष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवानिविममेरजांसि ॥ योअस्कंभायदुत्तरंसुधस्थंविचक्रमाणस्त्रेधोरुगायः ॥ २८॥

अक्रूरजप्यं षडक्षरमंत्रं दर्शयति। विष्णोरिति। विष्णोर्वीर्याणि वीर्योपलक्षितं कामम्। बहुत्वं पाशन्यायेनावयवाभिप्रायम्। वाच्यवाचकयोरभेदात्तत्प्रतिपादकं शब्दं प्रवोचं प्रोक्तवानस्मि। तमेव दर्शयति। य इति। यो विष्णुः कं ककारं पार्थिवानि रजांसि च विममे। कमिति व्यंजनमात्रं विस्वरम्। अतो विभक्तिस्वर एवात्र शिष्ट इत्यनुदात्तम्। पृथिवी देवता येषां तानि पार्थिवानि। बहुत्वं पूजायाम्। तेन लमिति पृथिवीबीजमुद्धृतं

भवति।रंजयंति इष्टप्रदानेनेति रजांसि रंजकानि विममे शब्दितवान्।एकीकृत्येति शेषः।यश्च शब्दस्य प्रमाता उत्तरम् उत्कृष्टतरं सधस्थं स्थानम् अधिष्ठानम् अस्कभायत स्तंभितवान् । तेन "तत्त्वात्मानः स्मृताः स्पर्शा मकारः पुरुषो यतः" इति स्मृतेर्मकारमप्यत्रावरुद्धवान्।एवं ककारलकारमकारेषूद्धृतेषु ईकारमुद्धरति। त्रेधा विचक्रमाण उरुगाय इति । अस्मिन्नेव मातृकारूपे जगदंडे त्रेधा विक्रममाणः त्रीन् वर्णान् अ आ इ एतान् लंघयन् चतुर्थः उरुगायो दीर्घतया गेयः ईकारः तद्रूपोयमित्यर्थः । अत्र यद्यपि उद्धारक्रमे मकारात्परतः

प्रतद्विष्णुंस्तवतेवीर्येणमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणेष्वधि क्षियंतिभुवनानिविश्वा ॥ २९ ॥

ईकारो दृश्यते। तथापि ईकारस्य उत्तरमिति विशेषणात्ततः पूर्वत्वम्। तेन ककारलकारमकारेकारसंघात्मकं कामबीजमुद्धृतं भवति ॥२८॥ प्रतदिति । विष्णुवीर्येण कामबीजेन सह उच्चारितं तत् पदं प्रस्तवते प्रकर्षेण स्तौति। तत् किम्। यस्य वाच्योर्थः मृगो न भीमः कुचरो गिरिष्ठा इति।यथा भीमो भयंकरो मृगः सिंहस्तद्व- दुष्टान्मर्दयतीत्यर्थः । कुचरः कौ पृथिव्यां भूतपूर्वः भुवि कृतावतारः दीर्घं शब्दं मुरलीरवं कुर्वाणो वा ।

न् तां च श्रांतामालक्ष्य स्कंधे समारोपितवान्। ततस्तामपि गर्वितां परित्यज्य गतवानिति स्मर्यंते। तत्रेतराः भगवंतं मृगयंत्यो वदंति।पदे इवेति ।पदे गमनसूचके पांसुषु स्पष्टीभूते द्विजान् द्वयोर्गमकोदृश्येते इति शेषः। कीदृशे ते । दस्मे क्रीडागृहरूपे वने अंतः मार्गमध्ये निहिते स्थापिते।तयोर्द्वयोः पदयोर्मध्ये अन्यदेकं पदं गुह्यं गुप्तं जातम् । तेनानुमीयते—यामसौ नीतवान् तामसौ स्कंधे आरोपितवानिति । अत एवान्यपदं आविः

आधेनवोधुनयंतामशिश्वीः सबर्दुघाः शशया अप्रदुग्धाः ॥ नव्यानव्यायुवतयो-
भवंतीर्महद्देवानामसुरत्वमेकम् ॥ २० ॥

सुस्पष्टमाभारवत्त्वात् । अतः सा धन्या या कृष्णसध्रीचीना सहगामिनी, यतः पथ्या पथोनपेता कृष्णमार्गा-दस्मद्वदनपभ्रष्टा एवंभूतापि सा कृष्णेन त्यक्ता सती विषूची विष्वक् इतस्ततोंचति कृष्णमन्वेष्टुं गच्छतीति विषूची।दृश्यत इति शेषः।अत एकस्याअप्युत्कर्षमसहमानानां देवानामिति प्राग्वत्॥१९॥आधेनवइति । येषां देवानामस्मासु महदेकमसुरत्वं तान् धेनवः आधुनयंतां आसमंतात्कंपयंते। कृष्णवियोगातुराः धेनूर्दृष्ट्वापि

तेषां कंपोभूत्।एता उदीक्ष्य वा ते दयां कुर्वंत्विति भावः। कीदृश्यः। अशिश्वीः अबालाः।सबर्दुघा इति। पूर्वेव ता।शशयाः।शे देवानां कल्याणे निमित्ते शेरते ताःशशयाः।दशविधहविःप्रदानेन देवास्तर्पयंत्य इत्यर्थः। नव्याः।स्तुत्यास्तुत्याः युवतयश्च भवंतीर्भवत्यः अत्यंतगुणवत्यः।उपकाराच्च धेनूर्द्विषंतो देवाः कृतघ्नत्वभयाद्वा उद्विजतामित्यर्थः॥ २०॥ योस्माकं वल्लभः स एवास्मासु प्रतिकूलो जातः।देवास्तदेकाकाराः सर्वा अस्म-

**यदुन्यासुंवृषुभोरोरंवीतिसोअन्यस्मिन्यूथेनिदंधातिरेतः॥ सहिक्षपांवान्त्सभगुः सराजांमहद्देवानांमसुरत्वमेकम्॥ २१॥**

दिंद्रियवृत्तीः पश्यंतोपि न तमस्मदर्थं प्रार्थयंते इत्येतावतैवोपालभ्यंतेस्माभिरित्याहुः। यदन्यास्विति। यत् यः वृषभो महान् अन्यासु वृषस्यंतीषु गोष्विव अस्मासु रोरवीति मुरलीवादनादिशब्दं करोति।तेनास्मान् रत्युन्मुखीः करोति। स एवास्मान्विहाय अन्यास्मिन्यूथे स्त्रीकदंबे रेतो निदधाति।अन्याभ्यो रतिं प्रयच्छति। तेन प्रभुणा वंचिताः वयं कमन्यं शरणं व्रजेमहि।यतः स एव क्षपावान् चंद्रः,स एव भगः सूर्यः, स एव सर्वा-

सां प्रजानां राजा स्वतंत्रः। तस्मादवयवभूतांस्तत्परिसरर्तिनो देवानेव उपालभामह इत्यर्थः ॥ २१ ॥ यस्मा-
दयं स्वतंत्रस्तस्मादेनमनुकूलयितुम् अस्यैव गुणान् कीर्तयाम इत्याहुः । वीरस्येति।अस्य वीरस्य नु निश्चि-
तं स्वश्व्यं शोभनाश्वत्वमित्युपलक्षणं शोभनायुधत्वादेः।भो जनासः प्रकर्षेण नु निश्चितं किं वोचाम कास्मा
कं शक्तिरस्तीत्याशयाः किं तर्हि अयमस्तुत्य एव नेत्याहुः।अस्य एनं देवाः विदुः न तु वयं तत्त्वतो विद्म इत्य

षोळ्हायुक्ताः पंचपंचावहं-
तिमहद्देवानामसुरत्वमेकम् ॥ २२ ॥
वीरस्यनुस्वश्व्यंजनासः प्रनुवोचामविदुरस्यदेवाः ॥

र्थः।यत एनं षोळ्हायुक्तापञ्चपञ्चावहंतिपंचपंचविंशतिसंख्याभिमतभोक्रात्मसहिताः तत्त्वाभिमानिनो देवाः
षोढा षड्भिः प्रकारैर्युक्ताः रथिरथसारथिप्रग्रहहयगोचररूपेण बद्धाः संतः एनं साक्षिणम् आवहंति तंतं विपयदेशं
प्रापयंति। तथा च श्रुतिः—"आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
इंद्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्। आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति।आत्मादिभोक्रं-

तानां मिथः संबंधं दर्शयति।एवमेव विद्वांसो देवाः अस्मभ्यमप्येतद्विज्ञानं प्रयच्छंतीति।महदित्यादि।पूर्ववत्२२
भगवज्ज्ञानं लब्धुं शक्तिर्नास्तीत्याशंक्याहुः । देव इति । अस्य संबंधी एको देवः त्वष्टा सविता जगत्प्रसव
कर्त्ता अत एव विश्वरूपः पुरुधा बहुप्रकारेण प्रजाः भौतिकीः इमाः इमानि विश्वाः सर्वाणि चतुर्दशभुवनानि
जजान पुपोष च ।यस्मादेक एव देवोस्य फलोपमस्यावयवः । स ईदृक्कर्मा किमुत सर्वे यदनुग्रहं कुर्युस्तदा

देवस्त्वष्टासविताविश्वरूपः पुपोषप्रजाः पुरुधाजजान ॥ इमाचविश्वाभुवनान्य-
स्यमहद्देवानांमसुरत्वमेकम् ॥ २३ ॥महीसमैरच्चम्वासमीचीउभेतेअस्यवसुनान्यृ
ष्टे ॥ शृण्वेवीरोविंदमानोवसूनिमहद्देवानांमसुरत्वमेकम् ॥ २४ ॥

तज्ज्ञानं सुलभमेव स्यात् । अतो निरनुग्रहाणां देवानां महदेकमसुरत्वम् ॥२३॥ दिव्यदृष्ट्या पश्यंतो भावि
नापि कर्मणा भगवंतं स्तुत्वोपालंभते । महीति । महत्यौ चम्वौ कौरवपांडवसेने समीची अन्योन्यं संमुखे
समैरत् सम्यक् प्रेरितवान् ते उभे अपि अस्य वसुना बलेन न्यृष्टे प्रचलिते।एवं सर्वचालकोप्ययं वीरः वसूनि

अतोनेकब्रह्मांडबीजगर्भमहाफलस्थानीयं समस्तं दृष्टदुःखनिवारणं भवंतमपहरतां देवानामिति। प्राग्वत्। अत्र
यो मां पश्यति सर्वत्रेत्यादिशास्त्रोक्तं भिन्नेष्वभेदानुसंधानं कैवल्यस्य व्यवहितम्। भवस्य प्रत्यक्षत्वादभेदस्य
चाहार्यत्वात्।अभिन्ने तु भेदकल्पनं कैवल्यस्याभेदप्रत्ययाधीनस्य सन्निहिततरत्वं—संसारहेतोर्भेदज्ञानस्य अ-
स्मिन्विप्रकर्षोस्तीति।एतदेव "सर्वं च मयि पश्यति" इति शास्त्रप्रसिद्धमस्माभिः श्रूयत इति भावः॥१४॥अहो

**श्यावींचयदरुंषीचस्व नानांचक्रातेयम्या ३ वपूंषितयोरन्यद्रोचतेकृष्णमन्यत् ॥ सांरौमुहद्देवानांमसुरत्वमेकम् ॥ १५ ॥**

महाश्चर्यम्।गच्छतोः रामकृष्णयोः मातृभ्यामपि निवारणं न कृतमित्याहुः।नानेति।श्यावी कृष्णवर्णा यशोदा।
अरुषी अरुणा रोहिणी। एते उभे स्वसारौ भगिन्यावपि यतः यम्या स्वेनानयितुं योग्ये दामबंधनवपुषी राम-
कृष्णशरीरे।बहुत्वंछांदसम्।नाना पृथक् चक्राते विक्षिप्तवत्यौ। अन्यतरापि स्वं पुत्रमहं न प्रेषयामीति असहनं
करोति चेदुभयोरप्यत्रावस्थानं भवेदिति भावः। तयोः स्वस्रोर्मध्ये एकस्यै यशोदायै अन्यत् एकं कृष्णं

वपुः रोचते।परिशेषादन्यदेकं वपुःअकृष्णं गौरम् एकस्यै रोहिण्यै रोचते । अतस्तयोरपि स्नेहविच्छेदं कार-
यतां देवानां महदेकमसुरत्वम्॥१८॥मातेति।यत्र यस्मिन् वपुर्द्वये सन्निहिते माता च गौः, दुहिता च गौः।ते उभे
अपि धेनू दोग्ध्र्यावेव भवतः न तु मातुर्जरार्तत्व मदोग्ध्रीत्वं वा आयातीत्यर्थः।सबर्दुघे क्षिरदोग्ध्र्यौ स्ववरिति
म्लेच्छेषु क्षीरनामेति प्रांचः।सगर्भाया नामेति तु प्रसिद्धम् । तेष्वेव तेन गर्भधारणदशायामपि क्षीरप्रदेश इति

**माताचयत्रदुहिताचधेनूसंबर्दुघेधापयेतेसमीची ॥ ऋतस्यतेसदसीळेअंतर्महद्देवा-**
**नामसुरत्वमेकम् ॥ १८ ॥**

गम्यते।धापयेते लोकान् वत्सांश्च पाययतः।समीची दोग्ध्रृणामनुकूले ।तत्र माता दुहितेति च जात्यभिप्रायेणैक-
वचनम्।ते उभे अपि ऋतस्य वेदस्य सदसीव सदसि अधिष्ठाने श्रीकृष्णाख्ये ब्रह्मणि अंतः।स्थित इति शेषः।
अत एव ईळे स्तौमि । अयं भावः । कृष्णाभिध्यानानां गवादीनां जरादिकं नासीत् । अतः परं तद्वियोगेन

तत्तासां दुर्वारमिति । व्रजस्योत्कर्षमसहमानानां गोद्रुहां महद्देवानामिति । प्राग्वत् ॥ १६ ॥ अन्यस्या इति । अन्यस्याः धेनोः वत्सं रिहती लिहंती का धेनुः ऊधः क्षीराशयं निदध प्रस्रविणं धृतवती । न कापीत्यर्थः । अपि च कया भुवा मिमाय मितवती स्वमूधः भूपर्यंतं कं देशं निनाय । क्वचिदपि देशे काले वा इदं न जातमित्यर्थः । व्रजे तु वत्सेषु वत्सपेषु च ब्रह्मणा नीतेषु मायायाः वत्सं श्रीकृष्णं लिहंती

अन्यस्यांवुत्संरिंहुतीमिंमायुकयांभुवानिदंधेधेनुरूधः ॥ ऋुतस्युसापयंसापिन्वु तेळांमुहद्देवानांमसुरत्वमेकंम् ॥ १७॥ पद्यावस्तेपुरुरूवपूंष्यूर्ध्वातस्थौत्र्यांविरोरिहाणा ॥ ऋुतस्युसद्मविचंरामिविद्वान्मुहद्देवानांमसुरत्वमेकंम् ॥ १८ ॥

सर्वापि धेनुः भुवा संयुतम् ऊधो निदधे । वात्सल्यातिशयादितिभावः । सा इला ऊधस्वती धेनुः ऋतस्य सत्यस्य संबंधिनां पयसा साक्षाद्ब्रह्मरसानंदात्मकेन क्षीरेण अपिन्वत अतर्पयत् । व्रजस्थं ब्रह्मास्मत्तोपनयतां देवानां महदेकमसुरत्वम् ॥ १७॥ पद्येति । पद्या या तु अभिसारिणीभिरभिसर्तुं यो

ग्या ते तव मूर्तिरूर्ध्वा सर्वसंसारबहिर्भूतापि परजनार्थं पुरुरूपा बहुरूपाणि धत्ते इत्यर्थः । ताभ्योन्या मूर्ति-
रूर्ध्वा अभिसरिणीभिरस्पृष्टा मध्ये तस्थौ स्थिता । रासक्रीडाप्रसंगे इत्यर्थः। कीदृशानि वपूंषि । त्र्यविरेरिणा
त्रीन् प्रदेशान् अवति प्रकाशयतीति त्र्यविः पार्श्वद्वयं पुरोभागश्चेति त्रयं प्रकाशयंती दृष्टिः तां रेरिहाणा लेलि-
हाना । त्रिष्वपि प्रदेशेषु स्थित्वा ग्रसमानेत्यर्थः । रासमंडले हि एकैकस्याः गोपिकायाः पार्श्वद्वये कृष्णद्वयं
मेका च मध्ये सर्वासां साधारणेति प्रदेशत्रयस्था कृष्णमूर्तिः प्रदेशत्रयगामिनी दृष्टिः सर्वात्मना ग्रसते ततोऽ

पदेइवनिहितेदस्मेअंतस्तयोरन्यद्गुह्यमाविरन्यत् ॥ सध्रीचीनापथ्या३सावि‍षू-
चीमहद्देवानामसुरत्वमेकम् ॥ १९ ॥

न्यदगोचरं किमपि न भवतीत्यर्थः।यत एवंरूपाणि वस्ते अतः ऋतस्य वेदस्य यज्ञादेर्वा सद्म आधिष्ठानं समर्पण
स्थानं वा परं ब्रह्माहं विद्वान् विचारामि विशेषेण जानामि। विद्वानिति कृष्णतादात्म्याभिमानात्।स्त्रीभावं वि-
स्मृतवती गोपी आत्मानं पुल्लिंगेन विशिनष्टि।यद्यप्येवम्।तथापि देवानां महदसुरत्वम्।अस्मदुत्कर्षासहत्वात्।
॥ १८ ॥पदे इवेति । अस्यामेव रासक्रीडायां सर्वाः गोपीः परित्यज्य एकां गृहीत्वा किंचिद्दूरं गतवान् भगवा

न्ति । निवेवेतीति । पलितः जरठोप्ययुक्तकारीत्याक्षेपः दूतोऽक्रूरो निवेवेति भृशं वेगेन गच्छतीत्यर्थः । आस्वि
ति । गम्यमानदिक्प्रदर्शनम् । एवमपि यं नयति सोऽस्माकमंतश्चरति । रोचनेन स्वरूपेण महान् सर्वोत्कृष्टः ।
अत एव वपूंषि वत्सवत्सपरूपाणि बिभ्रदयमेव नोऽस्मान् कर्त्रादिधर्मकान् ऋग्भिः अभिविचष्टे पश्यति प्रका
शयति। अतो यद्यप्येवं कृतार्थाः स्मः। तथापि अस्मदीयं दृष्टसुखमपहरतां देवानामित्यादि प्राग्वत्॥ १३॥ तदेव

विष्णुर्गोपाः परमं पाति पार्थः प्रिया धामान्यमृता दधानः ॥ अग्निष्टा विश्वा भुवनानि वे
द मुहद्देवानामसुरत्वमेकम् ॥ १४ ॥

दृश्यं सुखमुपवर्णयंति। विष्णुरिति। विष्णुः कृष्णरूपी गोपालकात्मकः परमं पावनं पाथः यामुनं जलं कालीयवि
षदूषितं पाति कालीयनिरसनेन रक्षति निर्दोषं करोति। इदं चैहिकसमस्तदुःखहेतूपमर्दोपलक्षणम् । प्रिया प्रिया-
णि धामानि रम्याणि स्थानानि अमृता अमृतानि ब्रह्मलोकादीनि दधानः स्वशरीरे एव धत्ते इति दधानश्चतुर्दशभु
वनानामाश्रय इत्यर्थः। अग्निष्टा विश्वा भुवनानि वेदतानि सर्वाणि धामानि अग्निरस्माकम्। विद ज्ञाने [illegible] वेदा

अमगत्यादिषुएतत्पूर्वकात्तमुह्यानौ इत्यतः पचाद्यच्तस्य शिशोरपि तव अंतर्मुखमध्ये विश्वं ददृशे। दृशां प्रतीचीनं प्रतीचि भवं त्वच्छरीरे एव स्थितं न तु दर्पण इव परावृत्तनयनेन बर्हिष्ठं सद्दृष्टमित्यर्थः। आयत् आभिमुख्येन प्रविशतीत्यायत्। त्वया स्वात्मन्युपसंहृतम्। एतेन जगदुत्पत्तिलयाधिष्ठानत्वं स्वतंत्रत्वं च बाल्येप्यासीदित्युक्तम्। कीदृशस्य शूरस्य। रामादेरिव युद्ध्यतः प्रहरतः पूतनादीन्निघ्नत इत्यर्थः। यतस्त्वमे

**निर्वेवेतिपलितोदूतआंस्वंतमुहांश्चरतिरोचुनेनं ॥ वपूंषिबिभ्रदभिनोविचष्टेमहद्देवानामसुरत्वमेकम् ॥ १३ ॥**

वंविधोऽतस्त्वयिगोर्मतिः निषिधं यथा स्यात्तथा चरति। गोस्तत्त्वमस्यादिवाचः संबंधिनी मतिः ब्रह्मविद्याख्या चेतोवृत्तिः निसेधतिर्गत्यर्थः। अवगतिरहितं यथा स्यात्तथा प्रचरंति। वृत्तिविषयत्वेप्येवंविध इति शृंगग्राहिकया गृहीतुं न शक्यते। फलात्मत्वेनतद्व्याप्यत्वाभावादित्यर्थः। तं त्वांपरमपुरुषार्थभूतमपि अपहरतां देवानामिति। प्राग्वत् ॥ १२ ॥ एवं विलप्यापि अक्रूरोपालंभपूर्वकं स्वस्य कृतार्थत्वमपि कुर्वं

स त्वं मित्रस्य वरुणस्य व्रतानि व्रतफलरूपोसि।ता इति विधेयापेक्षं बहुत्वम्। मातर्यपि निर्दयत्वं प्राप्त देवाः व्रतानि कुर्वंतीत्याश्चर्यमिति भावः ॥ १० ॥ द्विमातेति। पुनस्त्वं द्विमाता होता धर्मसंप्रदायप्रवर्तकः विदथेषु संग्रामेषु सम्राट् स्वतंत्रः।ईदृशोपि अग्रं पश्चाद्भवनंदादि अनुचरति भवान् बुध्नश्च वसुदेवादियादववंशमूलभूतः क्षेति क्षीयसे। एवं विपरीतकर्मणोपि भवतः रण्यानि रमणीयानि कर्माणि रण्यवाचः रमणीयवाचः कवयो मंत्रा

द्विमाताहोताविदथेषुसम्राळन्वग्रंचरतिक्षेतिबुध्नः ॥ प्ररण्यानिरण्यवाचोभरंतेमह

द्देवानामसुरत्वमेकम्॥ ११ ॥शूरस्येवयुध्यतोअंतमस्यप्रतीचीनंददृशेविश्वमायत्॥

अंतमतिश्चरतिनिषिधंगोर्महद्देवानामसुरत्वमेकम् ॥ १२ ॥

वा भरते प्रकर्षेण संचिन्वति एतदेवाश्चर्यमित्यर्थः॥ ११ ॥नन्वशक्ततयाहं बाल्ये मातापित्रोः सेवां कर्तुं सन्निधौ वा स्थातुं न समर्थोऽभूवम्।इदानीं तु तथा कर्तुमनुचितमित्याशंक्य बाल्येपि महांति कर्माणि कुर्वतस्तव किमप्य शक्यं नासीदित्याहुः। शूरस्येवेत्यादिना। अमि गत्यादिकर्माणि तम्यंति श्लायन्तीत्यंतमः उत्तानशायी।

णाः ताहशीरस्मान् सुवते हिनस्ति । सुवते इत्यात्मनेपदेन अस्मद्धिंसाजन्यं दोपमंगीकुर्वाणोयं शरणा गतोपेक्षादोषादपि न बिभेतीति उक्तम् । तत्र हेतुभूतानां देवानामिति प्राग्वत् ॥ ९ ॥ ननु उपमातरं यशोदां परित्यज्य साक्षाज्जननीमानंदयतो मम को दोष इति "अन्या वत्सं भरति क्षेति माता" इत्ययुक्त मुक्तम् । तथा कौमारे अविचारेण चरतोपि प्रौढतायां वर्णाश्रमधर्मानुरोधात् पूर्वासु स्त्रीष्वरुचिरुचितैवे-

शयुःपुरस्तादधनुद्विमाताबंधुनश्चरतिवत्सएकः ॥ मित्रस्यतावरुणस्यव्रतानिमुह द्वेवानामसुरत्वमेकम् ॥ १० ॥

ति "आक्षिप्तपूर्वासु" इत्युक्तोपि दोपो नास्तीत्याशंक्य तमेव दोषं द्रढयति । शयुरिति। द्विमाता द्वयोर्मात्रोरपत्य भूतस्त्वं शयुः शेते एव न तु किंचिच्चलति ताहशः उत्तानशायी त्वं परस्ताद्भूतो जातः । अध इति पक्षांतरशं-कायाम् । नु निश्चितम् एक एव वत्सो भवान् अबंधनः स्नेहकारुण्यबंधहीनश्चरति। अयं भावः। बलरामरूपेण सामिगर्भे एव मातृस्त्यक्तवान्, कृष्णरूपेण जातमात्र एवेत्यत्यंतं निरनुक्रोशोसीति। अहो आश्चर्यं—ताः तानि

मस्मत्सदृशीनां दासीनां कथा, मातरमपि कथमसावुपेक्षत इत्याहुः। अन्येति। अन्या देवकी मथुरायां वत्समिव वत्सं स्वसखीपुत्रमेकं भरति पुष्णाति।माता यशोदा क्षेति वियोगदुःखेन क्षीयते।अतोयमेव निर्घृणः किमुत सह चरणं देवानां नैष्ठुर्यमित्यर्थः ॥ ८॥ जारधवोप्ययमतिरूक्ष इत्याहुः।अक्षिदिति। पूर्वासु पूर्वं प्रतिगृहीतासु युवतिषु विषये आक्षित्। आसमंतात् क्षिणोतीति सर्वप्रकारेण वियोगदुःखद इत्यर्थः। अपरासु तरुणीषु

आक्षित्पूर्वास्वपरा अनूरुत्सद्योजातासु तरुणीष्वंतः॥अन्तर्वतीःसुवते अप्रवीता महद्देवानामसुरत्वमेकम् ॥ ९ ॥

निमित्त भूतासू अनूरुत् अनुरुध्यतेइत्यनुरुत् तासामनुरोधं करोति ताः परित्यज्य अस्मान्प्रति नायातीत्यर्थः। कीदृशीषु। सद्यो जातासु। कुब्जादयो हि जरठाः कंसदास्यः स्वामिद्रोहिण्यः कंसस्य अनुलेपनं किंचिद्दत्तं सद्यस्तरुण्यः ऋज्व्यश्च जाताः । वयं त्वंतर्वतीः। अंतर्नित्यमेनमेव ध्यायंत्यः अवीताः अनन्यगामिन्यः लज्जाजवनिकामुन्मुच्य स्वपतिपुत्रादीनविगणय्य प्रकाशमेव एनमभिसृताः स्वैकशर

बहुवचनम्।अझलंतत्त्वान्न नुम्।अच्छा।साक्षात्कृत्येति शेषः।दीद्ये दीप्त्या मूर्च्छिता सती कृष्णक्रीडावेशज्वरेण
जीवामीत्यर्थः। अत्र शपथपूर्वकं देवानुपालभंते। सर्वा अपि समिद्धे प्रदीप्तेग्नौ साक्षिणि सति ऋतमित्सत्य-
मेव वदेम यद्देवानां महदेकमसुरत्वमिति ॥ ७॥ समान इति।समान एक एव सन् राजा गोपीगणस्य रंजकः
पुरुत्रा अनेकधा विभृतः विविधेन रूपेण भृतः पोषितो गोवत्सरूपी सन्। कस्मिन्निमित्ते इदंबभूव। शये

**समानोराजाविभृतःपुरुत्राशयेशयासुप्रयुतोवनानु॥ अन्यावत्संभरतिक्षेतिमाताम्**
**हद्देवानामसुरत्वमेकम् ॥ ८ ॥**

शेरतेस्मिन्निति शयो व्यामोहः तस्मिन् सति शयासु व्यामोहवतीषु गोपीषु कृष्ण एवायं वत्सवत्स-
परूपेण अनुपेत्य नंदयतीत्यजानंतीषु प्रयुतः प्रकर्षेण स्नेहातिशयेन संलग्नः। कदाचनान्योपरिआक्र-
म्य वत्सरूपेण गतः सन्नित्यर्थः। ब्रह्मणा नीतेषु वत्सवत्सपेषु तन्मातॄरानंदयितुं स्वयं यथा तत्तद्रूपो बभूव
एवमक्रूरेण आहूतोपि अस्मानानंदयितुं द्वितीयं रूपं कुतो न धत्ते इत्यहो दौर्भाग्यमस्माकमिति भावः।आस्ता

न् देवाः मा मैव जुहुरंत बलात् मापहरंतु। हृञ् हरण इत्यस्यरूपम् । तस्मादेषां तन्न प्रियं—यदेतन्मनुष्या विद्युरिति देवानां तद्दर्शनविघ्नकारित्वं प्रसिद्धम्। तथाह। अग्नेः पूर्वं पदज्ञाः उक्तविधस्य पदस्य वेदितारः विद्यावंशप्रवर्त्तकास्तेपि विद्यागोपनपराः संतोऽत्र नोस्मान्। जुहुरतेत्यनुषंगः। कोसौ, यस्य पदमतिरहस्यमत आह ॥ पुराण्योरिति। अकारलोप आर्षः। ऋणो रक्षणचक्रियोरिति वत् ( ३ ) चक्रयो

विमं पुरुत्रापंतयंतिकामाःशम्यच्छांदीद्येपूर्व्याणि ॥ समिंद्धेअग्नावृतमिद्वदेममुहद्देवानांमसुरत्वमेकम् ॥ ७ ॥

रित्यपेक्षिते । सद्मनोरुपाध्योः कार्यकारणरूपयोरित्यर्थः। अंतर्मध्ये सन् केतुर्ज्ञापकः। यत्प्रसादादुपाध्योः स्वरूपं सिद्ध्यति स चिदात्मासावित्यर्थः। महदित्यादि। प्राग्वत् ॥ ६ ॥ काचिदाह। विम इतिमे । मम कामाः भोगोपकरणसामग्र्यः विपतयंति विशेषेण पतनं पतस्तं कुर्वंति ते विपतयंति दृष्टमात्र एव शोकेन मूर्छां जनयंतो भुवि पतनं कुर्वंतीत्यर्थः। अतः पूर्व्याणि प्राचीनानि शमी सुखानि। शमिति मान्तस्य क्लीबस्य

व्रजाद्वनं प्रति यातुः प्राक् प्रतिष्ठंत्याः पदे महदक्षरं परमं पदं विजज्ञे जनयामास। कः देवानामिंद्रादीनां व्रता व्रतानि "एकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास" इत्यादिश्रुतिप्रसिद्धानि आत्मज्ञानार्थं कृतानि ब्रह्मचर्याणि उप नु समीपे एव अविलंबितमेव प्रभूषं प्रभूषयन् प्रकर्षेण भूषयन् अनेककोटिजन्माराधनप्राप्यो पि अल्पेनैव कालेन दर्शनं दत्त्वा तेषां सुव्रतत्वमापादयन्नित्यर्थः॥ यो देवानां महता व्रतेन स्वमक्षरं पदं "तद्वि ष्णोः परमं पदम्" इति वेदांतप्रसिद्धं दर्शयति, स महाकारुणिकतया तदेव नित्यं गोनुगामी सन् गोष्पदे निहितं

**मोषूणोअत्रंजुहुरंतदेवामापूर्वेअग्नेपितरःपदज्ञाः॥ पुराण्योःसद्मनोःकेतुरंतर्महद्देवा नांमसुरत्वमेकंम्॥ ६ ॥**

दर्शयति। तादृशदेवमस्मत्तः उपनयतां देवानां महदेकमद्वितीयमसुरत्वम्। नृशंसमूर्द्धन्या देवा इत्यर्थः। अयं भावः। प्रणवादिप्रतीकं महतामपि चिरमुपासितं तुर्यप्रतिपत्तिहेतुः। नन्दकुमारपदं तु गोष्पदगततयाऽत्यल्प- कालं च सकृद्दृष्ट्वा "ब्रह्म यदोंकारः" इति परापरब्रह्मत्वमेवं कृष्णपदे महदक्षरत्वं चातत्प्रतिपत्त्युपायत्वादिति ध्येयम्॥ ५॥ मोषूण इति। अत्र अस्मिन् गोष्पदस्थे महत्यक्षरे पदे विषये सुशोभनान् भक्तान् नः अस्मा-

उत्कृष्टसंपदः ॥ ३ ॥ एवं मनोरथं कुर्वन्नक्रूरः श्रीकृष्णं प्राप्याह । स्वदस्वेति । हे अग्ने सर्वदेवतामुखभूता-ग्न्यभिमानिन् विष्णो हव्या शुचीनि भक्तजनाहृतानि उपायनानि स्वदस्व आस्वादय इषोऽन्नानि संदिदीहि सम्यक् दीपय वर्द्धयेत्यर्थः । अस्मद्र्यक् अस्माभिः सह अञ्चति गच्छतीत्यस्मद्र्यक् अस्मत्पक्षीयो भूत्वे-त्यर्थः । श्रवांसि परेषां यशांसि संमिमीहि परिमापय स्वीयैर्यशोभिरतिक्रमस्वेत्यर्थः।पृत्सु संग्रामेषु विश्वान्

स्वदंस्वहुव्यासमिषोंदिदीह्यस्मुद्र्यं१क्संमिमीहिश्रवांसि॥ विश्वांअग्नेपृत्सुतांज्येषि शत्रूनह्राविश्वांसुमनांदीदिहीनः ॥ ४ ॥ उपसःपूर्वाअधयद्व्यूषुर्महद्विजंज्ञेअक्षरं पदेगोः॥व्रतादेवानामुपनुप्रभूषंमहद्देवानांमसुरत्वमेकम् ॥ ५ ॥

शत्रून् तान् प्रसिद्धान् कंसादीन् ज्येपि जयसि जयेति वा । नः अस्माकं क्रतून् संकल्पान् विश्वान् सर्वान् सुमनाः प्रसन्नः सन् दिदीहि प्रकाशय ॥ ४ ॥ एवमक्रूरेण प्रार्थनापूर्वकं कृष्णे व्रजात् मथुरां प्रति नीयमाने तद्वियोगेन शोचंत्यो गोपिकाः वियोगहेतून् देवानधिक्षिपंति सुपूर्णेन सूक्तेन । प्रजापतेरार्षं वैश्वदेवं चैतत्सू-क्तम् । उपस इति । अध अहो यत् यदा पूर्वा उपसः व्यूषुः इतः प्राक्तनाः उपःकालाः प्रादुर्बभूवुः तदा गोः

भवंत्वित्यर्थः ॥ १ ॥ श्रृण्वंत्विति। नोस्माकं वाक्यं वृषणः मनोरथवर्षिणः पर्वतासः पर्वताः ध्रुवक्षेमासः नित्यकल्याणाः इळयान्नेन मदंतः पुष्यन्त आदित्यैः सह अदितिश्च नः श्रृणोतु मरुतश्च शर्म भद्रम् अनि घ्रानुबंधिकल्याणं यच्छंतु मह्यम् ॥ २ ॥ सदेति। सदा नित्यं सुगः शोभनगमनः पितुमान् अन्नवान्

श्रृण्वंतुनोवृषणःपर्वतासोध्रुवक्षेमासइळयामदंतः ॥ आदित्यैर्नोअदितिःश्रृणोतुय
च्छंतुनोमरुतःशर्मभद्रम् ॥ २॥ सदासुगःपितुमाँअस्तुपंथामध्वादेवाओषधीःसंपि
पृक्त ॥ भगोमेअग्नेसख्येनमृध्याउद्रायोअस्यांसदनंपुरुक्षोः ॥ ३ ॥

पंथाः मार्गः अस्तु।मध्वा मधुना भो देवाः ओषधीर्मार्गस्थाः संपिपृक्त संयोजयत। हे अग्ने मे मम भगः षड्विधमैश्वर्यमस्तु सख्ये परमात्मलाभाय न मृध्याः मृधं संग्रामं मा कुरु संग्रामफलेन स्वर्गलाभेन तत्र कृष्णलाभे विघ्नं मा कुर्वित्यर्थः। पुरु बहु क्षुवतः विश्वसृजः कृष्णस्य सदनमस्यां प्राप्नुयाम्। कीदृशस्याउद्रायः

वाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतंसगोविंदसूनोर्नीलकंठस्य कृतौ स्वोद्धृतमंत्रभागवतव्याख्यायां मंत्ररहस्यप्रकाशिकायां वृंदावनकांडो द्वितीयः ॥ २ ॥ आथाऽक्रूरकाण्ड आरभ्यते । तत्र "देवानां दूत" इत्यादयः षड्विंशतिमंत्राः प्रजापतिना दृष्टाः अक्रूरस्य व्रजे गमनं गोपीविलापं च प्रतिपादयन्ति, तान् व्याकुर्मः। तत्र चत्वारो मंत्राः अक्रूरवाक्य रूपा इत्याह।देवानामिति।अहं देवानां कंसवागाद्यभिमानिनामस्या

देवानां॑दू॒तः पु॑रु॒ध प्रसू॒तोऽना॑गान्नो वोचतु स॒र्वता॑ता ॥ शृ॒णोतु॑ नः पृथि॒वी द्यौरु॒तापः॒ सूर्यो॒ नक्ष॑त्रैरु॒र्व१॒न्तरि॑क्षम् ॥ १ ॥

दीनां दूतोस्मि पुरुध बहुप्रकारेण प्रसूतः कंसवधार्थिभिस्तैः कृष्णमानेतुं व्रजं प्रति प्रेषितोस्मि । अतो नोऽस्मान् अनागान् निर्दोषान् प्रति सर्वताता विश्वस्य पिता श्रीकृष्णः वोचतु वचनेन संभावयतु । तातेति सुपो डादेशः । तदिदं नोस्माकं प्रार्थनावाक्यं पृथिवी द्यौरुत आपः सूर्यश्च नक्षत्रैः सह उरु महत् अन्तरिक्षम् अंतरिक्षस्थदेवतायूथमिद्रवाय्वादिकं च शृणोतु । एते देवा ममानुकूला

नान्यस्ततस्थोप्यसंगतः" इति। एवमध्यात्ममाधिदैवं च यत्रासुपर्णेत्यस्यापि तात्पर्यं तत एवावगंतव्यम्॥ ननु कुत एवं द्वेधा व्याख्यानं सर्वेषां मंत्राणां क्रियत इत्याशंक्य स्कांदे कैलाससंहितायां दहरविद्याव्याख्यानप्रसंगे उक्तं—"सैषा दहरविद्यात्र द्विधा ते परिकीर्तिता ।आध्यात्मिकी भवेदेका तथान्या त्वाधिभौतिकी ॥ तत्र त्वाध्यात्मिकी सर्वैर्दुष्करा न हि संशयः ।आधिभौतिकसंज्ञा तु तस्मान्मुक्त्यर्थमाचरेत् । सानुदभ्रसभामध्ये नृत्यमानस्य शूलिनः । दर्शनं नान्यदित्येतत्सम्यगत्र मयोदितम्" । तत्रैव "दहृं विपापं परवेश्मभूतमुमासहायं परमेश्वरं प्रभुम्" इत्यादीनि वाक्यान्युदाहृतानि यजुर्वेदवाक्यमेतत् । तथान्यत्र शाखांतरेपि। "आलोच्यैतत्सर्वमेव प्रयत्नादव्याख्येयं स्यादस्मदुक्तानुसाराद्" इति सर्वत्र व्याख्या द्वैविध्यस्यातिदेश उक्तः। तेन येध्यात्मं निरोधसमाधावनधिकारिणस्तेषामाधिभौतिकी भगवल्लीला हृद्यारूढाचित्तसमाधिफललाभाय भवति। एतदेवाभिप्रेत्योक्तं श्रीमद्भागवते—"आच्छिद्य कीर्तिं सुश्लोकां वितत्य ह्यंजसा नु कौ। तमोनया तरिष्यंतीत्यगात्स्वं पदमीश्वरः" इति ॥ पुराणांतरेष्वप्याधिभौतिकांश एव भूयसा ग्रंथेनोपबृंहित इति स्पष्टं वेदेनोक्तं "विष्णोः कर्माणि पश्यत" इत्युपपादितं चैतदुपोद्घात एवेति दिक् ॥ ४० ॥ ॥ इति श्रीमत्पद

मित्युक्तवानित्यर्थः।सर्वोप्युपदेशो मनोनिग्रहांत इति भावः।शेषमुक्तार्थम् ।ये अर्वाच इत्यृग्व्याख्यातारः।द्वासु पर्णेत्यृक्तथापक्षे यथाश्रुतार्थैव । अन्यः एकः अभिचाकशीति सर्वतः प्रकाशते । शेषं स्पष्टम् ॥ ३९ ॥ कुत्र शब्दितस्य ब्रह्मण एवं ज्ञानं जातं तदाह । यत्रेति । यत्र स्थाने सुपर्णाः प्रीणं गोपाः अमृतस्य भाग मन्नस्य कवलमनिमेषं निमेषमात्रमपि कालमनतिक्रांतं विदथा ज्ञानेन स्वप्रत्ययेन मन्यमानाः अभिस्वरन्ति एहि

यत्रासुपर्णअमृतस्यभागमनिमेषंविदथाभिस्वरन्ति ॥इनोविश्वस्यभुवनस्यगोपाः समाधीरःपाकमत्राविवेश ॥ ४० ॥

कृष्ण२इति कृष्णं गवामन्वेपणार्थं गतम् अभितः स्वरंति आकारयंति।अत्र स्थाने इनः स्वामी विश्वस्य कृत्स्न स्य भुवनस्य गोपाः पालकः स वेदांतप्रसिद्धो धीरो मा मया वत्सांश्चारयता व्याकुलीकृतोपि अव्याकुलो कं शुद्धांतःकरणमाविवेश ज्ञप्तिमात्ररूपो मत्यं स्वात्मज्ञानं दत्तवान् कृत्स्नं स्वलीलातात्पर्यं दर्शितवानित्यर्थः । ॥३२॥
अत्र द्वासुपर्णेति मंत्रस्य तात्पर्यं यास्कोक्तादिशा जीवेशौ पक्षिणौ देहवृत्ते "जीवेभिमानतः मुक्ते देहगतं दुःखं

संघातादन्यमेव प्रतिपादयतीत्यर्थः। यथा न हिंस्यात्सर्वाभूतानीति रागतः प्राप्तहिंसानिवृत्तिमुखेन हिंसाख्यो योगांगभूतो यज्ञविशेषो विधीयते स एव सम्यगनुष्ठितः "अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः" इति योगशास्त्रोक्तं फलं प्रसूते।न चैतदस्य फलम्। किंतु निरोधसमाधिरेव।तथा च निवृत्तिमुखेनावरधर्मार्थमपि विधीयमानं साधनं परधर्म एव पर्यवस्यति। प्रवृत्तिमुखेन परमो धर्मस्त्वाख्यायिकाभ्य एव उन्नेयः।पूर्वमंत्रोक्तदिशा "वि-

अवः परेण पितरं यो अस्यानुवेद पर एनावरेण ॥ कवीयमानः क इह प्रवोचद्देवं मनः कुतो अधि प्रजातम् ॥ ३९ ॥

त्कृष्णो वृत्तिगोपीषु विद्यां वा नितरां जहौ। तां च त्यक्त्वैक्यतृप्तः संस्ताभ्योऽदादिति जीविते" इति क्रीडातात्पर्यम्॥३८॥एतदेव वत्सादीन् हृतान् ब्रह्मणा ज्ञात्वा उक्तमित्याह।अव इति। अस्य जगतः पितरं योनुवेद वरेण शास्त्राचार्योपदेशेनानुजानाति स कवीयमानो वस्तुतत्त्वालोचनपरः कः प्रजापतिः इह लोके प्रवोचत् प्रोक्तवान्। किं प्रोक्तवान्।देवं क्रीडापरं मनः कुतो अधिप्रजातं तन्मनसो योनिभूतं वासनाजालमेव संसारमूल

अत्राप्याख्यायिकायां तात्पर्याभावादर्थांतरमेव विवक्षितमिति न कश्चिद्दोष इत्यर्थः ॥ ३७ ॥ एतदेव स्पष्टयति । अव इति । परेण पदा निवृत्तिरूपेणावलंबनेन अवः चरं वत्सं धर्मं बिभ्रती प्रकाशयंती तथा अवरेण प्रवृत्तिरूपेण पदा परः परं धर्मं प्रकाशयंती गौः वाणी एनाः एताः एतानि आख्यानानि उदस्थात् उत्क्रम्य स्थितवती, न हि वेदे आख्यायिकाः प्रतिपाद्यंते । अपि तु तद्द्वारेण परापररूपो धर्म एवेत्यर्थः ।

अवः॒परे॑णप॒रए॒नावरे॑णप॒दाव॒त्सांबिभ्र॑तीगौरुद॑स्थात् ॥ साक॒द्रीची॒कंस्वि॒दर्द्धं॒परा॑गात्कंस्वि॒त्सू॑तेन॒हियू॒थेअ॒न्तः ॥ ३८ ॥

सा प्रवृत्तिनिवृत्तिरूपा वाक् कद्रीची केन सह अञ्चति प्रकाशते कमर्थं वाच्यवृत्त्याभिधत्ते कंस्विदर्द्धं किं वा स्थानं परागात् दूरं गतवती । किं तात्पर्येण प्रतिपादयति।क स्वित्सूते कस्मिन्नधिकारिणि प्रवृत्तिरूपं फलं जनयति तत्सर्वं दुर्ज्ञेयमित्यर्थः । हि यस्मात् इयं यूथे अंतर्न योति मिश्रीभवति पृथङ्क् भवतीति यूथमनात्मा अवान्तरवाक्यानि वा जडसंघातः कथाप्रबंधो वा तत्र अन्तस्तन्मात्रपर्यवसायिनी न हि । किन्तु

सुराधसमिति व्याख्यानं कुर्वते तेषां सुराधःशब्दस्य सांतत्वकल्पने "स पिष्टेन शोचिषा यः सुराध" इति वदेकवचनांतसमभिव्याहारादिकं निमित्तं नास्ति । विशेषतस्तु बहुवचनांतस्त्रीलिंगसमभिव्याहारात् सुराधाशब्दः आबंत एव । "स्तोत्रं राधानां" पत इत्यादौ स्वरांतस्यापि स्पष्टं दर्शनात् ॥ ३६ ॥ द्वितीयं दोषं परिहरति । स्त्रियः सतीरिति । स्त्रियः गोप्योपि सतीः अविच्युतस्वधर्मा एव । यतः तान् ताः । पुंस्त्वशापंम्।

स्त्रियंःसुतीस्तांउमेपुंसआंहुःपश्यंदक्षुण्वान्नविचेतदुंधः ॥ कुविर्यःपुत्रःसइमाचिंकेतु यस्ताविंजुानात्सपितुष्पितासंत् ॥ ३७ ॥

'ताउम' इति तैत्तिरीयाः स्त्रीत्वमेवात्र दर्शयंति । ताः स्त्रियः पुंसः महापुरुपसंबंधिनीरेवाहुः । जगदात्मना कृष्णेन सह रममाणानां तासां न पातिव्रत्यभंगोस्तित्यर्थः । एवं पश्यन् अक्षण्वान् चक्षुष्मान् न विचेतत् एतदजानन् अंध एव । एवं यः कविरेकांतदर्शी भगवल्लीलातात्पर्याभिज्ञः स इमा इमानि सर्वाणि भूतानि चिकेत जानीते यश्च ताः विजानात् विजानीते स पितुष्पिता गुरोरपि गुरुः सन् असत् दीप्यते ।

गसेवत लब्धवानित्यर्थः । अतः गोपाः गोप्यो गावश्च स्तोकवत्यो भगवत्संगेन निस्तीर्णाः।यूयं तु अतोकवत्यो युवतयः साक्षाद्भगवदंगसंगेन तं तु तमेव शीभं यात गच्छत तत्संगेनात्मानं च प्रपिन्वध्वं प्रकर्षेण परमानंदावाप्त्या तर्पयध्वम्।कीदृश्यः।यूयम् इपयंतीः इच्छंत्यः।इषेः स्वार्थेणिचि गुणाभावः जसि पूर्वसवर्णदीर्घश्च छांदसः । सुराधाः शोभना मुख्या राधा यासु ताः सुराधाः।राधाया मुख्यत्वं तु ब्रह्मवैवर्ते प्रथमांशे पद्मपुराणे उत्तरखंडे कार्तिकमाहात्म्यादौ च प्रसिद्धम्।पुनः कीदृश्यो यूयम्।वक्षाणाः नद्य इव समुद्रम् आपृणध्वम् आपूरयध्वम्।अत्र यातेति व्यापकं प्रतिगमनं पूर्णस्य पूरणं तृप्तस्य तर्पणं चानन्यशरण।सु गोपीषु भगवतोप्यौत्सुक्य प्रदर्शनेन भक्तिमाहात्म्यद्योतनार्थम्। तथा ह्युक्तं—स्फुटमनुगवशत्वं नाथते भीष्मभापामृतयितुमनृतेशश्चक्रिणः पार्थसौत्येति।शीभं शेतेस्मिन् सर्वमिति शीः भाति स्वयं ज्योतिष्ट्वेन प्रकाशते इतिभः शीश्चासौ भश्चेति शीभस्तं सर्वलयाधिष्ठानचिन्मात्रस्वरूपमित्यर्थः । यद्वा शीभृ कत्थने शीभंते कत्थंते श्लाघंते आत्मानमनेनेति शीभः । अकर्तरि चकारके संज्ञायामिति करणे घः। यं प्राप्य भक्ताः कृतार्थमात्मानं मन्यंत इत्यर्थः।एवं विश्वामित्रेणाज्ञताः गोपदारिकाः श्रीकृष्णमभिसस्रुरित्यवगंतव्यम् ॥ केचित्तु सुराधा इत्यस्य

धात्रासनायां लयोदयवंति भोक्ता तु स्थिर इति सप्तमगर्भमंत्रस्य तात्पर्यं दर्शितम् । अयं भावः । यथा भारते जरत्कारवे पितृभिः कुशस्तंबमूलगर्तमूषकादिरूपकेण स्ववंशस्तंबपुरुषसंसारावलिः प्रदर्शिता एवमत्र देवक्यादिरूपकेणाध्यात्मिकोर्थो दर्शितो न त्विहाख्यायिकायां तात्पर्यमिति ॥ ३५ ॥ अथ विश्वामित्रो नदीसमुद्रापदेशेन गोपीः कृष्णं प्रत्यभिसारयति । अतारिषुरिति। भरताः भरंति धारयंति पुष्णंति

अतारिषुर्भरता गव्यवः समभक्त विप्रः सुमतिं नदीनाम्॥ प्रपिन्वध्वमिषयंतीः सुराधा आवक्षणाः पृणध्वं यात शीभं ॥ ३६ ॥

वा कर्मोपास्तिजं धर्ममिति भरताः सद्भक्ताः गव्यवः गाः आत्मन इच्छंति ते गोधनपुष्टिमिच्छंतो गोपाः। भूत्वेति शेषः। अतारिषुः तीर्णाः। संसारमित्यर्थात् । समतारिषुरिति वा संबंधः । तथा विप्रः सर्वेषां भक्तानां मध्ये महत्तमः ब्रह्मादीनाम्। नदतेर्नंदतेर्वा नदट् नदीनां प्रवाहगतानां वादवाचां वा समृद्धिमतीनां प्रस्रवंतीनां गोगोपीनां वा संबंधिनीं सुमतिं तत्त्वमस्यादिवाक्योत्थं ज्ञानं वा वत्सवत्सपभूते भगवति दीयं ज्ञानं वा। समभक्त सम्य-

वदाह्लादवद्द्रवति किमुत जंगमः तदा च वृष्णिवंश्यः कृष्णः स्वयूथेन सह एजति एजते अत्यंतं शोभतेइत्यर्थः ॥ ३४ ॥ ननु धर्मसंस्थापनार्थमवतीर्णस्य भगवतो बाल्ये मातृत्यागादिकं वयःसंधौ च जारकर्मेत्येतदयुक्तमित्याशंक्य परिहरति श्रुतिः । साकं जानामिति। ये पूर्वं सप्त अर्धगर्भाः उक्ताः तेषां साकं जानां सहजातानां मध्ये सप्तथं सप्तमम् एकजम् एकस्य ब्रह्मणोंशाज्जातं जीवमाहुः। षळित् षडेव यमाः यमलजाः ऋषयः

साकंजानांसप्तथमाहुरेकजंषळिद्यमाऋषयोदेवजाइति।तेषामिष्टानिविहितानिधा
मशःस्थात्रेरेजंतेविकृतानिरूपशः ॥ ३५ ॥

देवजा देवेभ्यश्चंद्रादिभ्यो जाता इति आहुः तेषामृषीणाम् षडिन्द्रियाणिं "प्राणा वा ऋषयः" इति श्रुतेः । इष्टानि इष्टादिफलभूतानि शरीराणि धामशः धामसु आधिदेवं स्वस्वे स्थाने विहितानि विशेषेण धृतानि संति चंद्रादिमंडलेषु । तान्येव स्थात्रे सप्तमजीवस्य भोगार्थं रूपशः रूपैरिति रूपशः तत्तत्पुरुषीयश्रोत्रादिरूपेण विकृतानि संति रेजंते शोभंते लोके। एतेन करणानि लौकिकदृष्ट्या नित्यान्यपि अध्यात्मदृष्ट्यावि-

प्रतीका दीप्यमानशरीराःस्त्रियः कृष्णश्चान्योन्यं विद्युद्घनशोभां जनयंतः क्रीडंत इत्यर्थः॥३२॥अत्र स्त्रीणामा
कर्पणार्थं भगवता वंशीरवः कृतः। तं वर्णयत्यृषिर्द्वाभ्याम् । गायंतीति। हे शतक्रतो तदुपाधिकविष्णो त्वा त्वां
गायत्रिणो गायत्र्याख्यसामगातारो गायन्ति तथार्किणः सोमाज्यपयःप्रभृतिद्रववंतो यजमानाः अर्कमंडला-
न्तः स्थं त्वाम् अर्चंति पूजयंति ये तु त्वां गेयमर्च्यं च वंशमिव मुरलीकाण्डमिव तदेव वादयितुं उद्येमिरे उद्यमं

**गायंतित्वागायत्रिणोर्चंत्यर्कमर्किणः॥ब्रह्माणस्त्वाशतक्रतउद्वंशमिवयेमिरे॥३३॥**
**यत्सानोःसानुमारुहद्भूर्यस्पष्टकर्त्वम्॥तदिन्द्रोअर्थंचेततियूथेनवृष्णिरेजति॥ ३४॥**

कारितवंतः। ते वृंदावनस्थाः स्थावरजंगमाः ब्राह्मणा एव त्वच्छरीराश्रिताऽनेककोटिब्रह्मांडाधिपतयोऽत्रस्था-
वरादिरूपेण स्थित्वा त्वां मुरलीवादने प्रवर्तयंतीत्यर्थः ॥३३॥ यत्सानोरिति॥इंद्रो भवान् यत् यदा सानोः
सानुम् उच्चादुच्चं स्थानम् आरुहत् आरूढवान् कर्त्वं कर्तव्यं च वंशीरवम् ततः स्थानाद्भूरि अत्यंतम् अस्पष्ट
स्पष्टीकृतवानसि सर्वेषां श्रवणगोचरं कृतवानसि तत् तदा अर्थमर्थ्यमानं जडमपि स्थावरं चेतति चेतन-

ददावित्यपि योज्यम् ॥ ३० ॥ एवं विप्रलब्धानामपि तासामात्मन्यनुरागमालक्ष्य शारदिकासु रात्रिषु ताभ्यो रतिमदात् । तत्र रात्रिं वर्णयत्यृषिः । ओर्वप्रा इति । हे रात्रि त्वं देवी दीव्यंती अमर्त्या अमानुषी त्वं ओरु अंतरिक्षं तेन तत्स्था इंद्रवाय्वाद्याः लक्ष्यंते।तान् यथा निवतो निहीनं स्थानं येषामस्ति तान् निवतो भूचरान् एवं उद्वतो देवगंधर्वादींश्च अप्राः प्रतीतवत्यासि।यतो भवती ज्योतिषा चांद्रेण तमो बाधते ज्योत्स्नावत्यो

**ओर्वप्राअमर्त्यानिवतोदेव्युं १द्वतः ॥ ज्योतिषाबाधतेतमः ॥३१॥ सेनेवसृष्टामंद धात्यस्तुर्नदिद्युत्त्वेषप्रतीका॥यमोहंजातोयमोजनित्वंजारःकनीनांपतिर्जनीनाम् ३२**

रात्रयस्त्रैलोक्यमानंदयतीत्यर्थः ॥३१॥ सेनेवेति । यमोग्निरूपोंतर्यामी जातोतीतोर्थः सर्वोपि स एव।एवं जनित्वं जनयितव्यमपि स एव । अतः स एव कनीनां कन्यानां युवतीनां च जारः पतिश्च सन् तासु अमं सुखं दधाति धारयति तथाकन्या जनी च जारेष्वमं दधाति। सर्वत्रैकवचनं जात्यभिप्रायम्।तत्र दृष्टांतः । अस्तुः जलप्रक्षेप्तुर्मेघस्वन इव विद्युद्यथामं कांतिं दधाति तथेत्यर्थः । कीदृशी । सेनेव सर्वांगसाकल्येन सृष्टा कन्या जनी च

गोपक्रीडास्थानं स्मर्यते । तदेव सूयवसादित्यादिना ग्रंथेन गवां लालनपालनादिकमुक्तम् ॥२९॥ संप्रति वयःसंधिगतस्य भगवतो गोपीविनोदादिरनुग्रह उच्यते॥गौरीरित्यादिना॥यः पूर्वमंत्रे ऋचो अक्षरे इत्यत्राक्षरत्वेनोक्तः सहस्राक्षरा वाक्देवतारूपाः परमे व्योमन् तीरतरोरुच्चप्रदेशे स्थित्या गौरीः पतिंवराःकन्यामिमाय निर्निदेत्यर्थः॥कथम्॥सलिलानि तक्षती त्वं यदि बभूवुषी असि तर्हि एकपदीत्यादिनवपदी भवेत्यंतं जात्यभिप्राये-

गौरीर्मिमायसलिलानितक्षत्येकपदीद्विपदीसाचतुष्पदी ॥ अष्टापदीनवपदीबभूवुषीसहस्राक्षरापरमेव्योमन् ॥ ३० ॥

णैकवचनान्तम्॥अयमर्थः॥यतः नग्नीभूय तीर्थजलानि स्पृशंती स्त्री तीर्थशक्तिं क्षिणोतीति यूयं च सर्वास्तथाभूताः स्वापराधजेन दोषेणाभिभूताःस्थ । यदि च तत्परिहारेण भवतीनामैश्वर्येच्छास्ति तर्हि नग्ना एव सत्यः एकपद्यो भवत एकं पदं बहिरागच्छतेत्यर्थः॥तथा कृतेषु पुनर्द्विपदीभवेत्याह । एवं नवपदीत्यंतमुक्तेतास्तद्वचनमलंघयंत्यस्तथैव कृत्वा वस्त्राणि परिदधुः॥उपबृंहणे तु व्योमस्थत्वं वस्त्राणि हरत एवोक्तम्॥अतो नवपद्यनंतरं वस्त्राणि

ति भावः॥२८॥अथाघासुरग्रस्तमात्मानं गोपजनो निवेदयाति । अजो नक्षामिति । यथा विष्णुःपृथिवीं महतीं क्षां भुवं दाधार दधार।द्यां च तस्तंभ मन्त्रेभिः मंत्रैः स्वीयैर्विचारैर्बलिबंधनार्थं कृतैः सत्यैर्निमित्तभूतैः।एवमयम-सुरोस्मान् ग्रसितुम् अधरेण हनुना भुवमाक्रम्य ऊर्ध्वहनुना दिवमुत्तभ्यास्तेअतस्त्वं प्रियाः प्रियाणां गोपानां पश्वः पशूनां च पदानि मार्गे गमनचिह्नानि निलीनानि सर्वेषामसुरमुखे प्रविष्टत्वात निपाहि।अर्थादर्भकानेव।

अजोनक्षांदाधारंपृथिवींतस्तंभद्यांमंत्रेभिः सुत्यैः ॥ प्रियापुदानिपुश्वोनिपांहिवि श्वायुरग्नेगुहागुहंगाः ॥ २९ ॥

निपाहीत्यस्य हीनानुपलभ्य त्राहीत्यर्थः । तत्रोपायमाह।विश्वेति । विश्वायुर्विश्वस्य जीवनप्रदाता त्वम् अग्ने जीवरूपेणांतःप्रविष्टगुहायां गुहं गूढं यथा स्यात्तथा गाः गच्छेत्यर्थः । अयं भावः । अस्य वृक्षादिना वधे तर्गतानां वधः स्यात् । अतोस्यांतः प्रविश्य इतोभ्यधिकया स्वशरीरवृद्ध्या एनं विदारयेति ।तच्च तथैव चकार भगवान् । अत एव वाक्यशेषे समेव धीराः संमाय चक्रुरिति तच्छरीरस्य सद्माकारत्वं श्रूयते। पुराणे च तस्य

स्य विनाशार्थं पुनः ऋपभासुरेण क्रियामाणं रेतःसेचनम् उपपृच्यता उपेत्य कथं समृष्टं जायताम् उपशब्दो पादपूरणार्थौ । ऋषभस्य रेतासि निमित्तभूते सति ॥ २७ ॥ इत्थं गोवचःश्रुत्वा कृष्णेन कृतो वृषभवधः प्रदेशांतरे श्रूयते । प्रनेमस्मिन्निति । योंतर्गोपाः अंतर्यामिन् नेस्मिन् अर्द्धं प्रपंचे स्थावरः सोमो नाम तत्पोषकः प्रददृशे प्रकर्षेण दृष्टो वेदे सोम औषधीनामधिपतिरित्यादौ।यश्च नेमम् अर्द्धं प्रपंचम् अस्था जंगमत्वेन आविः

प्रनेमंस्मिन्ददृशेसोमो।अंतर्गोपानेमंमाविरस्थाकृणोति ॥सतिग्मश्रृंगंवृषभंयुयुत्सन्द्रुहस्तंस्थौबहुलेबद्धोअंतः ॥ २८ ॥

कृणोति विस्पष्टयति सोंतर्गोपास्तिग्मश्रृंगं वृषभं वृषभासुरं युयुत्सन् योद्धुमिच्छन् द्रुहो द्रुह्यन् तस्थौ युद्धेन हत्वा स्थितोभूदित्यर्थः । कीदृशोसौ । बहुले महति जने संसारे अंतःहृदयपुंडरीकरूपे उपाधौ बद्धो मायया रुद्धोस्ति । योऽयमंतर्यामी जगद्धेतुः स एव जीवभावं प्राप्तान् स्वप्रतिबिंबान् स्थावरजंगमान् पाती-

पेक्षया स्वस्याधिक्यं दर्शयतीव । यत् यतः आसु सामुद्रीषु अप्सु यजुर्यज्ञेश्वरो भगवान् निदधे स्वयमेव
क्रीडार्थं स्वात्मानं स्थापितवान् । स यजुःशब्दितः मायाः अपरिमितस्त्रीपुत्रवंध्वादिरूपेण दर्शिताः अस्तृ-
णात् हिंसितवान् । सर्वासां मायानामुपसंहारं चकारेत्यर्थः । मायाः । पूतनावधादिलीलाः अस्तृणात् विस्ता-
रितवानिति वा । तत्र हिंसायां हेतुः—अर्चिनापदेति । अर्चिना पूज्येन अर्चिरादिमार्गपर्ववता पदेन वैकुंठाख्य-
स्थानेन तत्प्रापयितुमित्यर्थः।ततश्च स्वयमपि ताभिर्नारीभिः सह नाकं स्वर्गम् आरुहत् आरूढवान् यः
तमेव कीर्त्तय । कामक्रोधाद्याः समे सर्वे अन्यके कुत्सिताः शत्रवो नानायोनिप्रदत्वात् नभंतां मा भूवन्नश्यं
तामित्यर्थः । ततश्च निर्विघ्नेन वयमपि भगवत्स्वरूपानन्दं प्राप्स्याम इत्यर्थः ॥१०॥ वाक्यार्थे व्यासवाल्मी-
की पदार्थे यास्कपाणिनी।रामकृष्णकथां मंत्रैर्गायेते मम नायकौ ॥ १॥ सार्द्धं शतद्वयमृचां रामकृष्णकथानु
गम्।दर्शितं भगवांस्तेन तुष्यतात्सात्वतां पतिः॥२॥ इति श्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरवंशावतं
सगोविंदसूरिसूनोः श्रीनीलकंठस्य कृतौ स्वोद्धृतमंत्रभागवतव्याख्यायां मंत्ररहस्यप्रकाशिकायां मथुराकां-
डश्चतुर्थः ॥ ४ ॥ ॥ समाप्तोयं ग्रंथः प्रकाशिकाव्याख्यासहितः ॥

॥ छ ॥

इदं पुस्तकं श्रीमत्कृष्णदुर्गराजमंडलमंडलेश्वरमहाराजराजश्रीश्रीशार्दूलसिंहश्रीमहाराजानुजसकलराज्यलक्ष्मीसमलंकृतश्रीमहाराजराजश्रीजवानसिंहमहाराजानामनुज्ञया श्रीकृष्ण-
दासात्मजेन क्षेमराजेन स्वीये मुंबय्या "श्रीवेङ्कटेश्वर" ( स्टीम ) मुद्राक्षरयन्त्रालयेसीसकाक्षरैर्मुद्रयित्वाप्रकाशते संवत् १९६०, शके १८२५.

